॥ अथ ॥

महाकविकालिदासकृतं

सनातनकविरेवाप्रसादद्विवेदिप्रतिसंस्कृतं

# मालविकाग्निमित्रनाटकम्

*नेपथ्ये*

॥ पूर्वरङ्गः ॥

*तत्र पुष्करध्वनिनान्दी*

*तदन्ते मङ्गलाशंसानान्दी* १.१

एकैश्वर्ये[1]–स्थितोऽपि प्रणतबहुफलो[2] यः स्वयं कृत्तिवासाः
कान्तासम्मिश्रदेहोऽप्यविषयमनसां यः [3]पुरस्ताद् यतीनाम् ।
अष्टाभिर्यस्य कृत्स्नं जगदपि तनुभिर्बिभ्रतो नाभिमानः
सन्मार्गालोकनाय व्यपनयतु स वस्तामसीं वृत्तिमीशः ॥ १ ॥

*नान्द्यन्ते प्रविश्य* २.१

**सूत्रधारः** *नेपथ्याभिमुखमवलोक्य* [4]मारिष! इतस्तावत्। २.२

*प्रविश्य* २.३

**पारिपार्श्विकः** भाव! अयमस्मि। २.४

**सूत्रधारः** अभिहितोऽस्मि परिषदा कालिदासग्रथितवस्तु मालविकाग्निमित्रं नाम [5]नवं नाटकमस्मिन् वसन्तोत्सवे प्रयोक्तव्यमिति। तदारभ्यतां सङ्गीतकम्। २.५

**पारिपार्श्विकः** मा तावत्। [6]प्रथितयशसां भास-सौमिल्ल-कविपुत्रादीनां प्रबन्धानतिक्रम्य वर्त्तमानकवेः कृतौ बहुमानः। २.६

**सूत्रधारः** अयि। विवेकविश्रान्तमभिहितम्। २.७

पुराणमित्येव न साधु सर्व्वं
न चापि काव्यं नवमित्यवद्यम् ।
सन्तः परीक्ष्यान्यतरद् भजन्ते
मूढः परप्रत्ययनेयबुद्धिः ॥ २ ॥

**पारिपार्श्विकः** आर्यमिश्राः प्रमाणम्। ३.१

**सूत्रधारः** तेन हि त्वरतां भवान्। ३.२

शिरसा प्रथमगृहीतामाज्ञामिच्छामि परिषदः कर्त्तुम् ।
देव्या इव धारिण्याः सेवादक्षः परिजनोऽयम् ॥ ३ ॥

*निष्क्रान्तौ* ४.१

॥ इति प्रस्तावना पूर्व्वरङ्गश्च ॥ ४.२

॥ अथ प्रथमाङ्कारम्भको मिश्रविष्कम्भकः ॥ ४.३

॥ २ ॥

*ततः प्रविशति चेटी* ४.४

**चेटी** आणत्तम्हि देवीए धारणीए 'अइरप्पवुत्तोवदेसं छलिअं णाम णट्टअं अन्दरेण कीरिसी मालविअ' त्ति णट्टाअरिअं अज्जगणदासं पुच्छिदुं। ता दाव संगीदसालं गच्छम्मि।
*परिक्रामति।* आज्ञप्तास्मि देव्या धारिण्या 'अचिरप्रवृत्तोपदेशं छलिकं नाम नाट्यमन्तरेण 'कीदृशी मालविके'ति नाट्याचार्यम् आर्यगणदासं प्रष्टुम्। तत् तावत् संगीतशालां गच्छामि'। (परिक्रामति) ४.५

*ततः प्रविशत्याभरणहस्ता द्वितीया चेटी।* ४.६

**प्रथमा चेटी** *द्वितीयां दृष्ट्वा* हला कौमुदिए! कुदो दे दाणिं इअं धीरदा, जं समीवेण वि अदिक्कामंती इदो दिट्ठिं ण देसि? (द्वितीयां दृष्ट्वा) सखि कौमुदिके! कुतस्त इदानीमियं धीरता, यत् समीपेनाप्यतिक्रामन्ती इतो दृष्टिं न ददासि? ४.७

**कौमुदिका** अम्हो बउलावलिआ! सहि! देवीए इदं सिप्पिसआसादो आणीदं णागमुद्दासणाधं अंगुलीअअं सिणिद्धं णिज्झाअंती तुह उवालंभे पडिदम्हि। अहो बकुलावलिका! सखि! देव्या इदं शिल्पिसकाशादानीतं नागमुद्रासनाथमङ्गुलीयकं स्निग्धं निध्यायन्ती तवोपालम्भे पतितास्मि। ४.८

**बकुलावलिका** *विलोक्य* ठाणे क्खु सज्जदि दिट्ठि। इमिणा अंगुलीअएण उद्भिण्णकिरणकेसरेण कुसुमिदो विअ दे अग्गहत्थो पडिभादि। (विलोक्य) स्थाने खलु सज्जति दृष्टिः। अनेनाङ्गुलीयकेन उद्भिन्नकिरणकेसरेण कुसुमित इव ते अग्रहस्तः प्रतिभाति। ४.९

**कौमुदिका** हला! कहिं पत्थिदासि? सखि! कुत्र प्रस्थितासि। ४.१०

**बकुलावलिका** देवीए एव्व वअणेण णट्टाअरिअं अज्जगणदासं पुच्छिदुं उवदेसग्गहणे कीरिसी मालविअ त्ति। देव्या एव वचनेन नाट्याचार्यम् आर्यगणदासं प्रष्टुम् उपदेशग्रहणे कीदृशी मालविकेति? ४.११

**कौमुदिका** सहि! ईरिसेण वावारेण असण्णिहिदा वि सा कधं भट्टिणा दिट्ठा? सखि! ईदृशेन व्यापारेणासंनिहितापि सा कथं भर्त्रा दृष्टा? ४.१२

**बकुलावलिका** आं। सो जणो देवीए पास्सगदो चित्ते दिट्ठो। आम्। स जनो देव्याः पार्श्वगतश्चित्रे दृष्टः। ४.१३

---

पूर्वरङ्गो द्वाविंशत्यङ्गः। तत्रैव नान्दी अन्यतमा। पुष्करवाद्यनान्दी पुनरत्रैव जीमूतेत्युपनिबध्यते (१.२१)।

१. समासाभावे तु द्वितीयेऽपि चरणे 'देहे संमिश्रकान्तोऽपी'ति पठितुं बाध्यामहे। हार्वर्डमातृका(हामा)यां तु ०र्यस्थि० इत्येव पाठः।

२. **प्रणयबहुफलो** इति हामा.। **प्रणयिबहु०** इति तु युक्ततरम्। तत्र प्रणयः प्रार्थना। अत्र द्रष्टव्योऽस्माकं 'कालिदाससाहित्ये प्रणय-शब्दार्थ इति लेखः।अष्टौ मूर्त्तयः शाकुन्तलनान्द्यामुपनिबद्धाः पञ्चमहाभूतानि सूर्याचन्द्रमसौ होतृरूपो यजमानश्चेति।

३. पुरस्तादित्यस्य स्थाने सर्वत्र परस्तादित्येव पाठः, ऋते काग्र.।

४. ०लोक्य अलमतिविस्तरेणेति काग्रपाठः।

५. नवेति पदं काग्र. नास्ति। नाटकं नववसन्तो० इति तु हामा.। इदमेव नवपदमस्माभिर्नाटकविशेषणतयाऽदायि।

६. भासादयः प्रथितयशसः प्राचीनाः परीक्षितरचनाः ।

**कौमुदिका** कधं विअ? कथमिव? ४.१४

**बकुलावलिका** सुणु। चित्तसालं गदा देवी जदा पञ्च्वग्गवण्णराअं चित्तलेहं आआरिअस्स आलोअन्ती चिट्ठदि तस्सिं अन्तरे भट्टा अ उवट्ठिदो।शृणु। चित्रशालां गता देवी यदा प्रत्यग्रवर्णरागां चित्रलेखामाचार्यस्य आलोकयन्ती तिष्ठति तस्मिन्नन्तरे भर्ता च उपस्थितः। ४.१५

**कौमुदिका** तदो तदो? ततस्ततः। ४.१६

**बकुलावलिका** उवआराणंतरं एक्कासनोवविट्ठेण भट्टिणा चित्तगदाए देवीए परिअणमज्झगदं आसणण्णअरं तं देक्खिअ देवी पुच्छिदा। उपचारानन्तरम् एकासनोपविष्टेन भर्त्रा चित्रगताया देव्याः परिजनमध्य–गताम् आसन्नचरां तां दृष्ट्वा देवी पृष्टा। ४.१७

**कौमुदिका** किं त्ति? किमिति। ४.१८

**बकुलावलिका** अपुव्वा इअं दारिआ देवीए आसण्णा आलिहिदा किंणामहेअ त्ति। अपूर्वेयं दारिका देव्या आसन्ना आलिखिताकिंनामधेयेति। ४.१९

**कौमुदिका** आकिदिविसेसेसु आअरो पदं करेदि। तदो तदो? आकृतिविशेषेष्वादरः पदं करोति। ततस्ततः? ४.२०

**बकुलावलिका** तदो अवधीरिअवअणे भट्टा संकिदो देविं पुणो वि अणुबंधिदुं पउत्तो। तदो कुमारिए वसुलच्छीए आअक्खिदं आवुत्त! एसा मालविअ त्ति। ततोऽवधीरितवचनो भर्ता शङ्कितो देवीं पुनरप्यनुबन्धुं प्रवृत्तः। ततः कुमार्या वसुलक्ष्म्या आख्यातम् आवुत्त एषा मालविकेति। ४.२१

**कौमुदिका** *सस्मितम्* सरिसं क्खु बालभाअस्स। तदो वरं कधेहि। सदृशं खलु बालभावस्य। ततः परं कथय। ४.२२

**बकुलावलिका** किं अण्णं। संपदं मालविआ सविसेसं भट्टिणो दंसणपधादो रक्खीअदि। किमन्यत्। साम्प्रतं मालविका सविशेषं भर्तुर्दर्शनपथाद् रक्ष्यते। ४.२३

**कौमुदिका** हला अणुचिट्ठ अत्तणो णिओअं। अहं वि एदं अंगुलीअअं देवीए उवणइस्सं। *निष्क्रान्ता* । सखि! अनुतिष्ठात्मनो नियोगम्। अहमप्येतदङ्गुलीयकं देव्या उपनेष्यामि। (निष्क्रान्ता) ४.२४

**बकुलावलिका** *परिक्रम्यावलोक्य* एसो णट्टाअरिओ अज्जगणदासो संगीदसालादो णिग्गच्छदि। जाव से अत्ताणं दंसेमि। *परिक्रामति* । एष नाट्याचार्यः आर्यगणदासः संगीतशालातो निर्गच्छति। यावदस्मै आत्मानं दर्शयामि। (परिक्रामति) ४.२५

*प्रविश्य* ४.२६

**गणदासः** कामं खलु सर्वस्यापि कुलविद्या बहुमता। न पुनरस्माकं नाट्यं प्रति मिथ्या गौरवम्। तथाहि ४.२७

**देवानामिदमामनन्ति मुनयः[७] शान्तं क्रतुं चाक्षुषं**
**रुद्रेणेदमुमाकृतव्यतिकरे स्वाङ्गे विभक्तं द्विधा ।**
**त्रैगुण्योद्भवमत्र लोकचरितं नानारसं दृश्यते**
**नाट्यंभिन्नरुचेर्जनस्य बहुधाऽप्येकं समाराधनम् ।। ४।।**

**बकुलावलिका** *उपेत्य* अज्ज बंदामि। आर्य वन्दे। ५.१

**गणदासः** भद्रे! चिरं जीव। ५.२

**बकुलावलिका** अज्ज! देवी पुच्छदि अवि उवदेसग्गहणे णादिकिलिसेदि वो सिस्सा मालविअ त्ति। आर्य! देवी पृच्छति अप्युपदेशग्रहणे नातिक्लिश्नाति वः शिष्या मालविकेति। ५.३

**गणदासः** भद्रे! विज्ञाप्यतां देवी परमनिपुणा मेधाविनी चेति। किं बहुना ५.४

**यद् यत् प्रयोगविषये**
**भाविकमुपदिश्यते मया तस्यै ।**
**तत् तद् विशेषकरणात्**
**प्रत्युपदिशतीव मे बाला ।।५।।**

**बकुलावलिका** *आत्मगतम्* अदिक्कमन्तीं विअ इरावदिं पेक्खामि। *प्रकाशम्* किदत्था दाणिं वो सिस्सा, जस्सिं गुरुजणो एवं तुस्सदि। अतिक्रामन्तीमिव इरावतीं पश्यामि। *(प्रकाशम्)* कृतार्थेदानीं वः शिष्या यस्या गुरुजन एवं तुष्यति। ६.१

**गणदासः** भद्रे! तद्विधानामसुलभत्वात् पृच्छामि कुतो देव्या तत् पात्रमानीतम्? ६.२

**बकुलावलिका** अत्थि देवीए वण्णावरो भादा वीरसेणो णाम। सो भट्टिणा णम्मदातीरे अंतपालदुग्गे ठाविदो। तेण सिप्पाहिआरे जोग्गा इअं दारिअ त्ति भणिअ बहिणीए देवीए उवाअणं पेसिदा। अस्ति देव्या वर्णावरो भ्राता वीरसेनो नाम। स भर्त्रा नर्मदातीरे अन्तपालदुर्गे स्थापितः। तेन 'शिल्पाधिकारे योग्येयं दारिके'ति भणित्वा भगिन्यै देव्यै उपायनं प्रेषिता। ६.३

**गणदासः** *आत्मगतम्* आकृतिविशेषप्रत्ययादेनामनूनवस्तुकां संभावयामि। प्रकाशम् भद्रे! मयापि यशस्विना भवितव्यम्। यतः – ६.४

**पात्रविशेषे न्यस्तं**
**गुणान्तरं व्रजति शिल्पमाधातुः ।**
**जलमिव समुद्रशुक्तौ**
**मुक्ताफलतां पयोदस्य ।।६।।**

**बकुलावलिका** अज्ज! कहिं दाणिं वो सिस्सा? आर्य! कुत्रेदानीं वः शिष्या। ७.१

---

७. मुनयो नाट्यशास्त्रनिबन्धा भरतः तस्य शतं पुत्राश्च। द्रष्टव्योऽत्र नाट्यशास्त्रस्य ११–१२४ अंशः। अत्र पशुबलिः कालिदासेन नानुमोदितः क्रतौ चाक्षुषत्वं शान्तत्वञ्चोपदर्शयता। शान्तत्वं नाम बलिकर्म्मादूषितत्वम्।

**गणदासः** इदानीमेव 'पञ्चाङ्गाभिनयमुपदिश्य मया विश्रम्यतामित्यभिहिता दीर्घिकावलोकनगवाक्षगता प्रवातमासेवमाना तिष्ठति। ७.२

**बकुलावलिका** तेण हि अणुजाणादु मं अज्जो। जाव से अज्जपरितोसणिवेदणेण उच्छाहं बड्ढेमि। तेन हि अनुजानातु मामार्यः। यावदस्या आर्यपरितोषनिवेदनेनोत्साहं वर्धयामि। ७.३

**गणदासः** दृश्यतां सखी। अहमपि लब्धक्षणः स्वगृहं गच्छामि। ७.४

*निष्क्रान्तौ* ७.५

**।। इति मिश्रविष्कम्भकः।। ७.६**

## ।। अथ प्रथमोऽङ्कः।। ७.७

।। ३।।

*ततः प्रविशत्येकान्तस्थितपरिजनोऽमात्येन लेखहस्तेनान्वास्यमानो राजा* ७.८

**राजा** *अनुवाचितलेखममात्यं विलोक्य* बार्हतक! किं प्रतिपद्यते वैदर्भः? ७.९

**अमात्यः** देव! आत्मविनाशम्। ७.१०

**राजा** निदेशमिदानीं श्रोतुमिच्छामि। ७.११

**अमात्यः** इदमनेन प्रतिलिखितम्- पूज्येनाहमादिष्टः पितृव्यपुत्रो भवतः कुमारो माधवसेनः प्रतिश्रुतसंबन्धः ममोपान्तिकमुपसर्पन्नन्तरात्वदीयेनान्तपालेनावस्कन्द्य गृहीतः। स त्वया मदपेक्षया सकलत्रसोदर्यो मोक्तव्य' इति। तन्न वो न[९] विदितं यत् तुल्याभिजनेषु राज्ञां प्रवृत्तिः। अतोऽत्र मध्यस्थः पूज्यो भवितुमर्हति। सोदर्या पुनरस्य ग्रहणविप्लवे विनष्टा। तदन्वेषणाय प्रयतिष्ये। अथवा अवश्यमेव माधवसेनो मया पूज्येन मोचयितव्यः श्रूयतामभिसन्धिः — ७.१२

**मौर्यसचिवं विमुञ्चति यदि**
**पूज्यः संयतं मम श्यालम्।**
**मोक्ता माधवसेनं ततो-**
**ऽहमपि बन्धनात् सद्यः ।।७।।**

**राजा** *सरोषम्* कथं कार्यविनिमयेन मयि व्यवहरत्यनात्मज्ञः। बार्हतक! प्रकृत्यमित्रः प्रतिकूलकारी च मे वैदर्भः। तद् यातव्यपक्षे स्थितस्य पूर्वसंकल्पितसमुन्मूलनाय वीरसेनप्रमुखं दण्डचक्रमाज्ञापय। ८.१

**अमात्यः** यदाज्ञापयति देवः। ८.२

**राजा** अथवा किं भवान् मन्यते? ८.३

**अमात्यः** शास्त्रदृष्टमाह देवः — ८.४

**अचिराधिष्ठितराज्यः शत्रुः**
**प्रकृतिष्वरूढमूलत्वात् ।**
**नवसंरोपणशिथिल-**
**स्तरुरिव सुकरः समुद्धर्तुम् ।।८।।**

**राजा** तेन हि अवितथं तन्त्रकारवचनम्। इदमेव निमित्तमुपादाय समुद्योज्यतां सेनापतिः। ९.१

**अमात्यः** तथा। *निष्क्रान्तः* ९.२

**परिजनः** *यथाव्यापारं राजानमभितः स्थितः।* ९.३

*प्रविश्य* ९.४

**विदूषकः** आणत्तोम्हि तत्तभवदा रण्णा 'गोदम! चिंतेहि दाव उवाअं जधा मे जदिच्छादिट्ठप्पदिकिदी मालविआ पच्चक्खदंसणा होदि' त्ति। मए अ तं तधा किदं। जाव से णिवेदेमि। आज्ञप्तोऽस्मि तत्रभवता राज्ञा 'गौतम! चिन्तय तावदुपायम्, यथा मे यदृच्छादृष्टप्रतिकृतिर्मालविका प्रत्यक्षदर्शना भवती'ति। मया च तत् तथा कृतम्। यावदस्मै निवेदयामि। *परिक्रामति* ९.५

**राजा** *विदूषकं दृष्ट्वा* अयमपरः कार्यान्तरसचिवोऽस्मानुपस्थितः। ९.६

**विदूषकः** *उपसृत्य* वड्ढतु भवं। वर्धतां भवान्। ९.७

**राजा** *सशिरःकम्पम्* इत आस्यताम्। ९.८

**विदूषकः** *उपविष्टः।* ९.९

**राजा** अपि कच्चिदुपेयोपायदर्शने व्यापृतं ते प्रज्ञाचक्षुः? ९.१०

**विदूषकः** पओअसिद्धिं पुच्छ। प्रयोगसिद्धिं पृच्छ। ९.११

**राजा** कथमिव? ९.१२

**विदूषकः** *कर्णे एव्वं विअ।* एवमिव। *आवेदयति* ९.१३

**राजा** साधु वयस्य! निपुणमुपक्रान्तम्। इदानीं दुरधिगम- सिद्धावप्यस्मिन्नारम्भे वयमाशंसामहे। कुतः— ९.१४

**अर्थं सप्रतिबन्धं प्रभुरधिगन्तुं सहायवानेव ।**
**दृश्यं तमसि न पश्यति दीपेन विना सचक्षुरपि ।। ९।।**

*नेपथ्ये* १०.१

अलं बहु विकथ्य। राज्ञः समक्षमेवावयोरश्वरोत्तरव्यक्ति- र्भविष्यति। १०.२

**राजा** *आकर्ण्य* सखे! त्वत्सुनीतिपादपस्य पुष्पमुद्भिन्नम्। १०.३

**विदूषकः** फलं वि अइरेण देक्खिस्ससि। फलमप्यचिरेण द्रक्ष्यसि। १०.४

*ततः प्रविशति कञ्चुकी* १०.५

**कञ्चुकी** देव! अमात्यो विज्ञापयति अनुष्ठिता प्रभोराज्ञेति। एतौ पुनर्हरदत्त— गणदासौ— १०.६

**उभावभिनयाचार्यौ परस्परजयैषिणौ ।**
**त्वां द्रष्टुमुद्यतौ साक्षाद् भावाविव शरीरिणौ ।।१०।।**

**राजा** प्रवेशय तौ। ११.१

**कञ्चुकी** यदाज्ञापयति देवः। *निष्क्रम्य ताभ्यां सह प्रविश्य च* इत इतो भवन्तौ। ११.२

---

८. १.चित्तम्, २.अक्षिणी, ३.भ्रुवौ, ४.हस्तौ, ५.पादौ चेति पञ्चाङ्गानीति तारानाथः विषमपदव्याख्यायां टीकायाम्। काटयवेमः पुनरन्यथा प्रवर्त्तते तथाहि— प्रेरणस्याङ्गपञ्चकमुक्तं सङ्गीतरत्नाकरे— नृत्यं तथा च कैवारो मर्मरो जागरं तथा। गीतं चेति समाख्यातं प्रेरणस्याङ्गपञ्चकमिति ।। अनयोराद्य एव पक्षो मान्यः, परस्य परवर्त्तित्वात् ।

९. न इति हामायां नास्ति।

**गणदासः** *राजानं विलोक्य* अहो! दुरासदो राजमहिमा — ११.३

**न च न°[10] परिचितो न चाप्यरम्य–**
**श्चकितमुपैमि तथापि पार्श्वमस्य ।**
**सलिलनिधिरिव प्रतिक्षणं मे**
**भवति स एव नवो नवोऽयमक्ष्णोः ॥११॥**

**हरदत्तः** महत् खलु पुरुषाकारमिदं ज्योतिः। तथाहि— १२.१

**द्वारे नियुक्तपुरुषानुमतप्रवेशः**
**सिंहासनान्तिकचरेण सहोपसर्पन् ।**
**तेजोभिरस्य विनिवर्त्तितदृष्टिपातैर्**
**वाक्यादृते पुनरिव प्रतिवारितोऽस्मि ॥१२॥**

**कञ्चुकी** एष देवः। उपसर्पतां भवन्तौ। १३.१

**उभौ** *उपेत्य* विजयतां देवः। १३.२

**राजा** स्वागतं भवद्भ्याम्। *परिजनं विलोक्य* आसने तावदत्रभवतोः। १३.३

**उभौ** *परिजनोपनीतयोरासनयोरुपविष्टौ।* १३.४

**राजा** किमिदं शिष्योपदेशकाले युगपदाचार्याभ्यामत्रोपस्थानम्। १३.५

**गणदासः** देव! श्रूयताम्। मया सुतीर्थादभिनयविद्या शिक्षिता। दत्तप्रयोगश्चास्मि। देवेन देव्या च परिगृहीतः।१३.६

**राजा** वाढं, जाने। ततः किम्? १३.७

**गणदासः** सोऽहममुना हरदत्तेन "[11]प्रधानपुरुषसमक्षं नायं मे पादरजसापि तुल्य इत्यधिक्षिप्तः। १३.८

**हरदत्तः** देव! अयमेव प्रथमं परिवादकरः— अत्रभवतः किल मम च समुद्रपल्वलयोरिवान्तरमिति। तद् अत्रभवान् इमं मां च शास्त्रे प्रयोगे च विमृशतु। देव एव नौ विशेषज्ञः प्राश्निकः। १३.९

**विदूषकः** समत्थं पइण्णादं। समर्थं प्रतिज्ञातम्। १३.१०

**गणदासः** प्रथमः कल्पः। अवहितो देवः श्रोतुमर्हति। १३.११

**राजा** तिष्ठ तावत्। पक्षपातमत्र देवी मन्यते। तदस्याः पण्डितकौशिकीसहितायाः समक्षमेव न्याय्यो व्यवहारः। १३.१२

**विदूषकः** सुष्ठु भवं भणादि। सुष्ठु भवान् भणति। १३.१३

**आचार्यौ** यद् देवाय रोचते। १३.१४

**राजा** मौद्गल्य! अमुं प्रस्तावं निवेद्य पण्डितकौशिक्या सार्धमाहूयतां देवी।१३.१५

**कञ्चुकी** यदाज्ञापयति देवः। *निष्क्रम्य सपरिव्राजिकया देव्या सह प्रविश्य।* इत इतो भवती। १३.१६

**देवी** *परिव्राजिकां विलोक्य* भअवदि! हरदत्तस्स गणदासस्स अ संरंभे कधं पेक्खसि? भगवति! हरदत्तस्य गणदासस्य च संरम्भे कथं पश्यसि। १३.१७

**परिव्राजिका** अलं स्वपक्षावसादशङ्कया। न परिहीयते प्रतिवादिनो गणदासः। १३.१८

**देवी** जइ वि एवं तह वि राअपरिग्गहो से पहाणत्तणं उवहरदि। यद्यप्येवं तथापि राजपरिग्रहोऽस्य प्रधानत्व–मुपहरति। १३.१९

**परिव्राजिका** अयि! राज्ञीशब्दभाजनमात्मानमपि चिन्तयतु भवती। पश्य— १३.२०

**अतिमात्रभासुरत्वं**
**पुष्यति भानोः परिग्रहादनलः ।**
**अधिगच्छति महिमानं**
**चन्द्रोऽपि निशापरिगृहीतः ॥१३॥**

**विदूषकः** *विलोक्य* अइ! उवट्ठिदा पीठमद्दिअं पंडिअकोसिइं पुरोकरिअ तत्तभोदी धारिणी। अयि! उपस्थिता पीठमर्दिकां पण्डितकौशिकीं पुरस्कृत्य तत्रभवती धारिणी। १४.१

**राजा** पश्याम्येनाम्। *दृष्ट्वा* १४.२

**मङ्गलालङ्कृता भाति कौशिक्या यतिवेषया ।**
**त्रयी विग्रहवत्येव सममध्यात्मविद्यया ॥१४॥**

**परिव्राजिका** *उपेत्य* विजयतां देवः। १५.१

**राजा** भगवत्यभिवादये। १५.२

**परिव्राजिका** १५.३

**महासारप्रसवयोः सदृशक्षमयोर्द्वयोः ।**
**धारिणीभूतधारिण्योर्भव भर्त्ता शरच्छतम्॥१५॥**

**देवी** जेदु अज्जउत्तो। जयत्वार्यपुत्रः। १६.१

**राजा** स्वागतं देव्यै। *परिव्राजिकां विलोक्य* भगवति! क्रियतामासनपरिग्रहः। १६.२

*सर्वे उपविशन्ति।* १६.३

**राजा** भगवति! अत्रभवतोर्हरदत्तगणदासयोः परस्परं विज्ञानसंघर्षो जातः। तदत्र भगवत्या प्राश्निकपद–मध्यासितव्यम्। १६.४

**परिव्राजिका** *सस्मितम्* अलमुपालम्भेन। पत्तने सति ग्रामे रत्नपरीक्षा? १६.५

**राजा** नैतदेवम्। पण्डितकौशिकी खलु भगवती। पक्षपातिनौ पुनरहं देवी च। १६.६

**आचार्यौ** सम्यगाह देवः। मध्यस्था भगवती नौ गुणदोषतः परिच्छेत्तुमर्हति। १६.७

**राजा** तेन हि प्रस्तूयतां विवादः। १६.८

**परिव्राजिका** देव! प्रयोगप्रधानं हि नाट्यशास्त्रम्। किमत्र वाग्व्यवहारेण? कथं वा देवी मन्यते? १६.९

**देवी** जइ मं पुच्छसि एदाणं विवादो येव्व ण मे रोअदि। यदि मां पृच्छसि एतयोर्विवाद एव न मे रोचते। १६.१०

**गणदासः** देवि! न मां समानविद्यतः परिभवनीयमवगन्तुमर्हसि। १६.११

**विदूषकः** भोदि! पेक्खामो उरभ्रसंबादं। किं मुहा वेदणदाणेण एदाणं? भवति पश्याम उरभ्रसंपातम्। किं मुधा

---

१०. हामातृकायां तु पाठः न च विपरि इति।
११. प्रधानपुरुष एषं विदूषकः।

वेतनदानेनैतेषाम्? १६.१२

देवी णं कलहप्पिओसि। ननु कलहप्रियोऽसि। १६.१३

विदूषकः मा एव्वं। अण्णोण्णकलहप्पिआणं मत्तहत्थीणं एक्कदरस्सिं अणिज्जिदे कुदो उवसमो? मैवम्। अन्योन्यकलहप्रिययोर्मत्तहस्तिनोरेकतर– स्मिन्ननिर्जिते कुत उपशमः? १६.१४

राजा ननु स्वाङ्गसौष्ठवाभिनयमुभयोर्दृष्टवती भगवती। १६.१५

परिव्राजिका अथ किम्? १६.१६

राजा तदिदानीमतः परं किमाभ्यां प्रत्याययितव्यम्। १६.१७

परिव्राजिका तदेव वक्तुकामास्मि। १६.१८

**शिल्ष्टा क्रिया कस्यचिदात्मसंस्था**
**संक्रान्तिरन्यस्य विशेषयुक्ता ।**
**यस्योभयं साधु स शिक्षकाणां**
**धुरि प्रतिष्ठापयितव्य एव ॥१६॥**

विदूषकः सुदं अज्जेहि भअवदीए वअणं। एसो पिण्डिदत्थो उवदेसदंसणेण णिण्णओ त्ति। श्रुतमार्याभ्यां भगवत्या वचनम्। एष पिण्डितार्थ उपदेशदर्शनान्निर्णय इति। १७.१

हरदत्तः परमम्। अभिमतं नः। १७.२

गणदासः देवि! एवं स्थितम्। १७.३

देवी जदा उण मन्दमेधा सिस्सा उवदेशं मलिणेन्ति तदा आअरिअस्स दोसो णु। यदा पुनर्मन्दमेधा शिष्या उपदेशं मलिनयन्ति तदा आचार्यस्य दोषो नु। १७.४

राजा एवमापठ्यते विनेतुरद्रव्यपरिग्रहोऽपि बुद्धिलाघवं प्रकाशयतीति। १७.५

देवी *आत्मगतम्* कधं दाणिं? *गणदासं विलोक्य, जनान्तिकम्* अलं अज्जउत्तस्स ऊसाहकारणं मणोरधं पूरिअ। *प्रकाशम्* विरम णिरत्थआदो आरंभादो। (आत्मगतम्) कथमिदानीम्? (गणदासं विलोक्य,जनान्तिकम्) अलमार्यपुत्रस्योत्साहकारणं मनोरथं पूरयित्वा। (प्रकाशम्) विरम निरर्थकात् आरम्भात्। १७.६

विदूषकः सुट्ठु भोदी भणादि। भो गणदास! संगीदआपदेसं लंभिअ सरस्सईउवाअणमोदआणं खादअमाणस्स किं दे मुहणिग्गहेण विवादेण? सुष्ठु भवती भणति। भो गणदास! संगीतकापदेशं लब्ध्वा सरस्वत्युपायनमोदकान् खादतः किं ते मुखनिग्रहेण विवादेन?१७.७

गणदासः सत्यम्। अयमेवार्थो देवीवचनस्य। श्रूयतामवसरप्राप्तमिदम् १७.८

**लब्धास्पदोऽस्मीति विवादभीरो–**
**स्तितिक्षमाणस्य परेण निन्दाम् ।**
**यस्यागमः केवलजीविकायै**
**तं ज्ञानपण्यं वणिजं वदन्ति ॥१७॥**

देवी अइरोवणीदा दे सिस्सा। ता अवरिणिट्ठिदस्स उवदेसस्स उण अण्णाय्यं पआसणं। अचिरोपनीता ते शिष्या। तत् अपरिनिष्ठितस्योपदेशस्य पुनरन्याय्यं प्रकाशनम्। १८.१

गणदासः अत एव मे निर्बन्धः। १८.२

देवी तेण हि दुवे वि भअवदीए उवदेसं दंसेथ। तेन हि द्वावपि भगवत्यै उपदेशं दर्शयतम्। १८.३

परिव्राजिका देवि! नैतन्न्याय्यम्। सर्वज्ञस्याप्येकाकिनो निर्णयाभ्युपगमो दोषाय। १८.४

देवी *आत्मगतम्* मूढे परिव्वाजिए! मं जग्गतिं वि सुत्तं विअ करेसि। मूढे परिव्राजिके! मं जाग्रतीमपि सुप्तामिव करोषि। *सासूयं परावर्तते।* १८.५

राजा *देवीं परिव्राजिकायै दर्शयति।* १८.६

परिव्राजिका *विलोक्य* १८.७

**अनिमित्तमिन्दुवदने!**
**किमत्रभवतः पराङ्मुखीभवसि ।**
**प्रभवन्त्योऽपि हि भर्तृषु**
**कारणकोपाः कुटुम्बिन्यः ॥१८॥**

विदूषकः णं सकारणं येव्व, अत्तणो पक्खो रक्खिदव्वो त्ति। *गणदासं विलोक्य* दिट्ठिआ कोवव्वाएण देवीए परित्तादो भवं। सुसिक्खिदो वि सव्वो उवदेसदंसणे ण[12] णिवुणो होदि। ननु सकारणमेव, आत्मनः पक्षो रक्षितव्य इति। (गणदासं विलोक्य) दिष्ट्या कोपव्याजेन देव्या परित्रातो भवान्। सुशिक्षितोऽपि सर्व उपदेशदर्शने न निपुणो भवति। १९.१

गणदासः देवि! श्रूयतामेवं जनो गृह्णाति। तदिदानीं– १९.२

**विवादे दर्शयिष्यामि[13]**
**क्रियासङ्क्रान्तिमात्मनः ।**
**यदि मां नानुजानासि**
**परित्यक्तोऽस्म्यहं त्वया ॥१९॥**

*आसनादुत्थातुमिच्छति।* २०.१

देवी *आत्मगतम्* का गई? *प्रकाशम्* पहवदि आअरिओ सिस्सजणस्स। (आत्मगतम्) का गतिः? (प्रकाशम्) प्रभवत्याचार्यः शिष्यजनस्य। २०.२

गणदासः चिरमपदेश[14]–शङ्कितोऽस्मि। *राजानं दृष्ट्वा* अनुज्ञातं देव्या। तद् आज्ञापयतु देवः कस्मिन् नभिनयवस्तुनि प्रयोगं[15] दर्शयिष्यामि। २०.३

राजा यदादिशति भगवती। २०.४

परिव्राजिका किमपि देव्या मनसि वर्त्तते। ततः शङ्कितासि। २०.५

देवी भण बीसद्धं। पहवदि प्पभू अत्तपरिअणस्स।

---

१२. सणे ण, सणेण इत्युभयथाप्येतद् योज्येत।
१३. दर्शयिष्यामि काग्र., दर्शयिष्यन्तं हामा.।
१४. हामा. 'अपदे शङ्कि' इति शकारमेकं परित्यज्य लिखितः।
१५. उपदेशं हामा.।

भण विस्रब्धम्। प्रभवति प्रभुरात्मनः परिजनस्य। २०.६

**राजा** मम[१६] चेति ब्रूहि। २०.७

**देवी** भअवदि! भण दाणिं। भगवति! भणेदानीम्। २०.८

**परिव्राजिका** देव! शर्मिष्ठायाः कृतिं चतुष्पदोत्थं छलिकं दुष्प्रयोज्यम् उदाहरन्ति। तत्रैकार्थसंश्रयमुभयोः प्रयोगं पश्यामः। तावता ज्ञायत एवात्रभवतो– रुपदेशान्तरम्। २०.९

**आचार्यौ** यदाज्ञापयति भगवती। २०.१०

**विदूषकः** तेण हि दुवे वि वग्गा पेक्खाघरे संगीदरअणं करिअ अत्तभवदो दूदं पेसअह। अधवा मुदंगसद्दो ज्जेव णो उत्थावइस्सदि। तेन हि द्वावपि वर्गौ प्रेक्षागृहे संगीतरचनां कृत्वा अत्रभवतो दूतं प्रेषयतम्। अथवा मृदङ्गशब्द एव न उत्थापयिष्यति। २०.११

**हरदत्तः** तथा। *उत्तिष्ठति* २०.१२

**गणदासः** *देवीं विलोकयति।* २०.१३

**देवी** *गणदासं विलोक्य* विअई होदु। ण हि विअअब्भत्थिणी अहं आरिअस्स। विजयी भवतु। न हि विजयप्रत्यर्थिनी अहमाचार्यस्य। २०.१४

**आचार्यौ** *प्रस्थितौ* २०.१५

**परिव्राजिका** इतस्तावत्। २०.१६

**आचार्यौ** *परिवृत्य* इमौ स्वः। २०.१७

**परिव्राजिका** निर्णयाधिकारे ब्रवीमि सर्वाङ्गसौष्ठवाभिव्यक्तये विरलनेपथ्ययोः पात्रयोः प्रवेशोऽस्तु। २०.१८

**आचार्यौ** नैतदावयोरुपदेश्यम्। *निष्क्रान्तौ* २०.१९

**देवी** *राजानमवलोक्य* जइ राअकज्जेसु ईरिसी उवाअणिउणत्तणं अज्जउत्तस्स तदो सोहणं भवे। (राजानमवलोक्य) यदि राजकार्येषु ईदृशी उपायनिपुणता आर्यपुत्रस्य ततः शोभनं भवेत्। २०.२०

**राजा** २०.२१

**अलमन्यथा गृहीत्वा**
**न खलु मनस्विनि! मया प्रयुक्तमिदम् ।**
**प्रायः समानविद्याः**
**परस्परयशःपुरोभागाः ॥ २०॥**

*नेपथ्ये मृदङ्गशब्दः* २१.१

*सर्वे कर्णं ददति।* २१.२

**परिव्राजिका** हन्त प्रवृत्तं सङ्गीतकम्। तथाह्येषा – २१.३

**जीमूतस्तनितविशङ्किभिर्मयूरै–**
**रुद्ग्रीवैरनुरसितस्य पुष्करस्य ।**
**निर्ह्रादिन्युपहितमध्यमस्वरोत्था**
**मायूरी मदयति मार्ज्जना मनांसि ॥ २१॥**

**राजा** तदस्याः सामाजिका भवामः। २२.१

**देवी** *आत्मगतम्* अहो अविणओ अज्जउत्तस्स। अहो अविनय आर्यपुत्रस्य। २२.२

*सर्वे उत्तिष्ठन्ति।* २२.३

**विदूषकः** *अपवार्य* भोः! धीरं गच्छ। तत्तभोदी धारिणी विसंवादइस्सदि।
(अपवार्य) भोः! धीरं गच्छ। तत्रभवती धारिणी विसंवादयिष्यति। २२.४

**राजा** २२.५

**धैर्यावलम्बिनमपि**
**त्वरयति मां मुरजवाद्यरावोऽयम् ।**
**अवतरतः सिद्धिपथं**
**शब्दः स्वमनोरथस्येव ॥ २२॥**

*निष्क्रान्ताः सर्वे* २३.१

**इति महाकविकालिदासकृतौ मालविकाग्निमित्रे नाटके प्रथमोऽङ्कः॥ १ ॥**[१७] २३.२

## ॥ अथ द्वितीयोऽङ्कः॥ ११

॥१॥

*ततः प्रविशति संगीतरचनायां कृतायामासनस्थो राजा धारिणी परिव्राजिका विभवतश्च परिवारः* १.२

**राजा** भगवति! अत्रभवतोराचार्ययोः कतरस्य प्रथममुपदेशो दृश्यताम्? १.३

**परिव्राजिका** ननु समानेऽपि ज्ञानवृद्धभावे वयोऽधिकत्वाद् गणदासः पुरस्कारमर्हति। १.४

**राजा** मौद्गल्य! एवमत्रभवतोरावेद्य स्वं नियोगमशून्यं कुरु।१.५

**कञ्चुकी** यदाज्ञापयति देवः। *निष्क्रान्तः* १.६

॥२॥

*प्रविश्य* १.७

**गणदासः** देव! शर्मिष्ठाया कृतिर्लयमध्या चतुष्पदास्ति। तस्याश्चतुर्थ- वस्तुनः[१] प्रयोगमेकमनाः श्रोतुमर्हति देवः। १.८

**राजा** आचार्य! बहुमानादवहितोऽस्मि। १.९

**गणदासः** यदादिशति देवः। *निष्क्रान्तः* १.१०

**राजा** *जनान्तिकम्* वयस्य! १.११

**नेपथ्यगृहगतार्या-**
**श्चक्षुर्दर्शनसमुत्सुकं तस्याः ।**
**संहर्त्तुमधीरतया**
**व्यवसितमिव मे तिरस्करिणीम्॥ १॥**

**विदूषकः** *अपवार्य* उवट्ठिदं णअणमधु सण्णिहिदमक्खिअं अ। ता अप्पमत्तो दाणिं पेक्ख। उपस्थितं नयनमधु सन्निहित- मक्षिकं च। तद् अप्रमत्त इदानीं पश्य। २.१

---

१६. मम देव्या इत्यर्थः। आत्मनः परिजनस्य मम चेति ब्रूहीति राज्ञो विवक्षा।

१७. रेवाप्रसादेन मयाद्य सैषा स्वयं स्वहस्तेन मुदाऽभ्यलेखि/मुद्रि ।
श्रीकालिदासस्य नितान्तरम्या कलाभिरामा च कृतिः प्रयोज्या ॥
१५ सेप्टेम्बर,२००१, एक्टनग्रामे, अमरीकासु।

॥ ३ ॥

*ततः प्रविशति आचार्यप्रत्यवेक्ष्यमाणाङ्गसौष्ठवा मालविका* २.२

**विदूषकः** *जनान्तिकम्* पेक्खदु भवं। ण क्खु से पडिच्छन्दादो परिहीअदि महुरदा। (जनान्तिकम्) पश्यतु भवान्। न खल्वस्याः प्रतिच्छन्दात् परिहीयते मधुरता। २.३

**राजा** *अपवार्य* वयस्य! २.४

**चित्रगतायामस्यां**
**कान्तिविसंवादशङ्कि मे हृदयम् ।**
**संप्रति शिथिलसमाधिं**
**मन्ये येनेयमालिखिता ॥ २ ॥**

**गणदासः** वत्से! मुक्तसाध्वसा सत्त्वस्था भव। ३.१

**राजा** *आत्मगतम्* अहो सर्वावस्थानानवद्यता रूपस्य। तथा हि-३.२

**दीर्घाक्षं शरदिन्दुकान्ति वदनं बाहू नतावंसयोः**
**संक्षिप्तं निबिडोन्नतस्तनमुरः पार्श्वे प्रमृष्टे इव ।**
**मध्यः पाणिमितो नितम्बि जघनं पादावरालाङ्गुली**
**छन्दो नर्तयितुर्यथैवमनसि श्लिष्टं तथास्या वपुः॥ ३ ॥**

**मालविका** *उपगानं कृत्वा चतुष्पदवस्तु गायति* ४.१

**दुल्लहो पिओ मे तस्सिं भव हिअअ णिरासं**
**अम्हो अपंगओ मे परिप्फुरइ किं पि वामओ।**
**एसो सो चिरदिट्ठो कहं उवणईदव्वो णाह**
**मं पराहीणं तुई परिगणअ सतिण्हं॥ ४ ॥**

दुर्लभः प्रियो मे तस्मिन् भव हृदय निराशम्
अहो अपाङ्गो मे परिस्फुरति किमपि वामः ।
एष स चिरदृष्टः कथमुपनेतव्यो नाथ
मां पराधीनां त्वयि परिगणय सतृष्णाम् ॥

*ततो यथारसमभिनयति।* ५.१

**विदूषकः** *जनान्तिकम्* भो वयस्य! चउप्पदवत्थुअं दुवारीकरिअ तुइ उवट्ठाविदो अप्पा तत्तहोदीए।भो वयस्य! चतुष्पदवस्तुकं द्वारीकृत्य त्वय्युपस्थापित आत्मा तत्रभवत्या। ५.२

**राजा** सखे! एवमेव ममापि हृदयम्। अनया खलु— ५.३

**जनमिमनुरक्तं विद्धि नाथेति गेये**
**वचनमभिनयन्त्या स्वाङ्गनिर्देशपूर्वम् ।**
**[2]प्रणयगतिमदृष्ट्वा धारिणीसन्निकर्षा—**
**दहमिव सुकुमारप्रार्थनाव्याजमुक्तः॥ ५ ॥**

**मालविका** *गीतान्ते निष्क्रमितुमारब्धा।* ६.१

**विदूषकः** भोदि! चिट्ठ। किं वि वो विसुमरिदो कम्मभेदो। तं दाव पुच्छिस्सं। भवति! तिष्ठ। किमपि वो विस्मृतः कर्मभेदः। तं तावत् प्रक्ष्यामि। ६.२

**गणदासः** वत्से! क्षणमात्रं स्थित्वा उपदेशविशुद्धा यास्यसि। ६.३

**मालविका** *निवृत्य स्थिता।* ६.४

**राजा** *आत्मगतम्* अहो! सर्वास्वस्थासु चारुता शोभां पुष्यति। तथाहि — ६.५

**वामं सन्धिस्तिमितवलयं न्यस्य हस्तं नितम्बे**
**कृत्वा श्यामाविटपसदृशं स्रस्तमुक्तं द्वितीयम् ।**
**पादाङ्गुष्ठाऽऽलुलितकुसुमे कुट्टिमे पातिताक्षं**
**नृत्तादस्याः स्थितमतितरां कान्तमृज्वायतार्द्धम् ॥ ६ ॥**

**देवी** णं गोदमवअणं वि अज्जो हिअए करेदि? ननु गौतमवचनमप्यार्यो हृदये करोति। ७.१

**गणदासः** देवि! मा मैवम्। देवप्रत्ययात् संभाव्यते सूक्ष्मदर्शिता गौतमस्य। पश्य—७.२

**मन्दोऽप्यमन्दतामेति संसर्गेण विपश्चितः ।**
**पङ्कच्छिदः फलस्येव निकषेणाविलं पयः ॥ ७ ॥**

*विदूषकं विलोक्य* तच्छृणुमो वयं विवक्षितमार्यस्य। ८.१

**विदूषकः** *गणदासं विलोक्य* कोसिइं दाव पुच्छ। पच्छा जो मए कम्मभेदो दिट्ठो तं भणिस्सं। कौशिकीं तावत् पृच्छ। पश्चाद् यो मया कर्मभेदो दृष्टस्तं भणिष्यामि। ८.२

**गणदासः** भगवति! यथादृष्टमभिधीयतां गुणो वा दोषो वेति ८.३

**परिव्राजिका** यथादृष्टं सर्वमनवद्यम्। कुतः — ८.४

**हस्तैरन्तर्निहितवचनैः सूचितः सम्यगर्थः**
**पादन्यासो लयमुपगतस्तन्मयत्वं रसेषु ।**
**शाखायोनिर् मृदुरभिनयः षड्विकल्पानुवृत्त भावे**
**भावे नुदति विषयान् रागबन्धः स एव ॥ ८ ॥[3]**

**गणदासः** देवः कथं मन्यते। ९.१

**राजा** वयं स्वपक्षे शिथिलाभिमानाः संवृत्ताः। ९.२

**गणदासः** अद्य नर्त्तयितास्मि। कुतः — ९.३

**उपदेशं विदुः शुद्धं सन्तस्तमुपदेशिनः ।**
**श्यामायते न युष्मासु यः काञ्चनमिवाग्निषु ॥ ९ ॥**

**देवी** *गणदासं प्रति* दिट्ठिआ(ऽ)परिक्खआराहणेण अज्जो वड्ढइ। दिष्ट्या परीक्षकाराधनेनार्यो वर्धते। १०.१

**गणदासः** देवीपरिग्रह एव मे वृद्धिहेतुः। *विदूषकं विलोक्य* गौतम! वदेदानीं यत् ते मनसि वर्त्तते। १०.२

**विदूषकः** पढमोवदेसदंसणे पढमं बम्हणस्स पूजा कादव्वा। सा णं वो विसुमरिदा। प्रथमोपदेशदर्शने प्रथमं ब्राह्मणस्य पूजा कर्तव्या। सा ननु वो विस्मृता। १०.३

**परिव्राजिका** अहो प्रयोगाभ्यन्तरः प्रश्नः। १०.४

*सर्वे प्रहसिताः।* १०.५

**मालविका** *स्मितं करोति।* १०.६

**राजा** *आत्मगतम्* उपात्तसारश्चक्षुषा मे स्वविषयः।यदनेन—१०.७

**स्मयमानमायताक्ष्याः**
**किञ्चिदभिव्यक्तदशनशोभि मुखम् ।**
**असमग्रलक्ष्यकेसर—**
**मुच्छ्वसदिव पङ्कजं दृष्टम् ॥ १० ॥**

---

१. चतुर्थ वस्तु शाखापदवाच्यम् अभिनयाङ्गम्?
२. प्रणय एव प्रार्थनात्र।

३. दशरूपकावलोके धनिकेन दत्त एष पाठः। मुद्रितस्तु पाठ एवंरूपः— हस्तैः=अङ्गैः, मुप=मनु, षड्वि= तद्वि, भावे भावे=भावो भावं, विषयान्=विषयाद्। इमे षड् विकल्पा नृत्यस्य नाट्यशास्त्रे २२.४३ कारिकायाम्— i. वाक्यम् ii.सूचा iii.अङ्कुरः iv. शाखा v.नाट्यायितम् vi.नि–वृ/वृत्यङ्कुरः।

**गणदासः** महाब्राह्मण! न खलु प्रथमं (न वा) नेपथ्यसवन– मिदम्। अन्यथा कथं त्वां दक्षणीयं नार्चिष्याम:। ११.१

**विदूषकः** मए णाम सुक्खघणगज्जिदे अन्तरिक्खे जलपाणं इच्छदा चादआइदं। अहवा पंडितसंतोसपच्चआ णं मूढ़ा जादी। जइ अत्तभोदीए सोहणं भणिदं तदो इमं से पारितोसिअं पअच्छांमि। *राज्ञो हस्तात् कटकमाकर्षति।* मया नाम शुष्कघनगर्जिते अन्तरिक्षे जलपानमिच्छता चातकायितम्। अथवा पण्डितसन्तोषप्रत्यया ननु मूढजाति:। यत: अत्रभवत्या शोभनं भणितं तत इदमस्यै पारितोषिकं प्रयच्छामि। (राज्ञो हस्तात् कटकमाकर्षति।) ११.२

**देवी** चिट्ठ दाव। गुणन्तरं अजाणन्तो किंणिमित्तं तुमं आहरणं देसि। तिष्ठ तावत्। गुणान्तरमजानन् किंनिमित्तं त्वमाभरणं ददासि। ११.३

**विदूषकः** परकेरअं त्ति करिअ। परकीयमिति कृत्वा। ११.४

**देवी** *आचार्य विलोक्य* अज्ज गणदास! णं दंसिदोवदेसा दे सिस्सा। आर्य गणदास! ननु दर्शितोपदेशा ते शिष्या।११.५

**गणदासः** वत्से एहि गच्छाव इदानीम्। ११.६

*सहाचार्येण निष्क्रान्ता मालविका* ११.७

**विदूषकः** *जनान्तिकम्* एत्तिओ मे मदिविहवो भवंतं सेविदुं। एतावान् मे मतिविभवो भवन्तं सेवितुम्। ११.८

**राजा** *जनान्तिकम्* अलमलं परिच्छेदेन। अहं हि – ११.९

**भाग्यास्तमयमिवाक्ष्णोर् हृदयस्य महोत्सवावसानमिव।**
**द्वारपिधानमिव धृतेर् मन्ये तस्यास् तिरस्करिणीम्॥११॥**

**विदूषकः** *जनान्तिकम्* दलिद्द विअ आदुरो वेज्जेण ओसहं दीअमाणं इच्छसि। दरिद्र इवातुरो वैद्येनौषधं दीयमानमिच्छसि। १२.१

*प्रविश्य* १२.२

**हरदत्तः** देव! मदीयमिदानीं प्रयोगमवलोकयितुं क्रियतां प्रसाद:।१२.३

**राजा** *आत्मगतम्* अवसितो दर्शनार्थ:। *दाक्षिण्यमवलम्ब्य प्रकाशम्* ननु पर्युत्सुका एव वयम्। १२.४

**हरदत्तः** अनुगृहीतोऽस्मि १२.५।

*नेपथ्ये* १२.६

**वैतालिकः** जयतु जयतु देव:। उपारूढो मध्याह्न:। तथा हि—१२.७

**पत्रच्छायासु हंसा मुकुलितनयना दीर्घिकापद्मिनीनां**
**सौधान्यत्यर्थतापाद् वलभिपरिचयद्वेषिपारावतानि।**
**बिन्दूत्क्षेपान् पिपासुः परिसरति शिखी भ्रान्तिमद् वारियन्त्रं**
**सर्वैरुस्त्रैः समग्रैस्त्वमिव नृपगुणैर्दीप्यते सप्तसप्तिः॥१२॥**

**विदूषकः** अविहा अविहा। अम्हाणं उण भोअणवेला उवट्ठिदा। अत्तभवदो उइदवेलादिक्कमे चिइच्छिआ दोसं उदाहरंदि। *हरदत्तं विलोक्य* हरदत्त! किं दाणि भणसि। अविध अविध। अस्माकं पुनर्भोजनवेलोपस्थिता। अत्रभवत उचितवेलातिक्रमे चिकित्सका दोषमुदाहरन्ति। (हरदत्तं विलोक्य) हरदत्त! किमिदानीं भणसि। १३.१

**हरदत्तः** नास्ति मद्वचनावकाशोऽत्र। १३.२

**राजाः** *हरदत्तं विलोक्य* तेन हि त्वदीयमुपदेशं श्वो वयं द्रक्ष्याम:। विरमतु भवान्। १३.३

**हरदत्तः** यदाज्ञापयति देव:। *निष्क्रान्तः* १३.४

**देवी** णिव्वट्ठेदु अज्जउत्तो मज्जणविहिं। निर्वर्तयतु आर्यपुत्रो मज्जनविधिम्। १३.५

**विदूषकः** भोदि! विसेसेण पाणभोअणं तुवरावेहि। भवति! विशेषेण पानभोजनं त्वरय। १३.६

**परिव्राजिका** *उत्थाय* स्वस्ति भवते। सपरिजनया देव्या सह निष्क्रान्ता। १३.७

**विदूषकः** भो वअस्स! ण केवलं रूवे सिप्पे वि अदुदुदीआ मालविआ। भो वयस्य! न केवलं रूपे शिल्पेऽप्यद्वितीया मालविका। १३.८

**राजा** वयस्य! १३.९

**अव्याजसुन्दरीं तां ललितविधानेन योजयता।**
**परिकल्पितो विधात्रा बाणः कामस्य विषदिग्धः॥१३॥**

किं बहुना। सखे! चिन्तयितव्योऽस्मि। १४.१

**विदूषकः** भवदा वि अहं। दिढं विपणिकन्दू विअ मे उअरब्भंतरं दज्झइ। भवताप्यहम्। दृढं विपणिकन्दुरिव मे उदराभ्यन्तरं दह्यते। १४.२

**राजा** एवमेव भवान् सुहृदर्थेऽपि त्वरताम्। १४.३

**विदूषकः** गिहीदक्खणोऽम्हि। किंतु मेहावली—णिरुद्धा जोण्हा विअ पराहीण— दंसणा तत्तभोदी मालविआ। भवं वि सूणा—परिसर—चरो विअ गिद्धो आमिस— लोलुवो भीरुओ अ। ता अणादुरो हविअ कज्जसिद्धिं पत्थअंतो मे रोअसि। गृहीतक्षणोऽस्मि। किं तु मेघावलीनिरुद्धा ज्योत्स्नेव पराधीनदर्शना तत्रभवती मालविका। भवानपि सूनापरिसरचर इव गृध्र आमिषलोलुपो भीरुकश्च। तत् अनातुरो भूत्वा कार्यसिद्धिं प्रार्थयमानो मे रोचसे। १४.४

**राजा** कथमनातुरो भविष्यामि १४.५

**सर्वान्तःपुरवनिताव्यापारप्रतिनिवृत्तहृदयस्य।**
**सा वामलोचना मे स्नेहस्यैकायनीभूता॥१४॥**

*निष्क्रान्ताः सर्वे।* १५.१

## इति महाकविकालिदासकृतौ मालविकाग्निमित्रे नाटके द्वितीयोऽङ्कः॥ २॥ १५.२

## ॥ अथ तृतीयाङ्कारम्भप्रवेशकः॥ १.१
## ॥१॥

*ततः प्रविशति परिव्राजिकायाः परिचारिका* १.२

**परिचारिका** आणत्तम्हि भअवदीए परिव्वाजिअए देविए उवाअणत्थं बीअऊरअं गेण्हिअ आअच्छ त्ति। ता जाव पमदवणपालिअं महुअरिअं अण्णेसामि। *परिक्रम्य अवलोक्य च* एसा तवणीआसोअं ओलोअंती महुअरिआ चिट्ठदि। ता जाव णं उवसप्पामि। आज्ञप्तास्मि भगवत्या परिव्राजिकया देव्या उपायनार्थं बीजपूरकं गृहीत्वागच्छेति। तद् यावत् प्रमदवनपालिकां मधुरिकामन्विष्यामि। (परिक्रम्य अवलोक्य च) एषा तपनीयाशोकमवलोकयन्ती मधुकरिका तिष्ठति। तद्

यावदेनामुपसर्पामि। १.३

*ततः प्रविशति यथोक्तव्यापारा उद्यानपालिका।* १.४

**समाहितिका** *ताम् दृष्ट्वा उपसृत्य* महुअरिए! अवि सुहो द उज्जाण–व्वावारो? मधुकरिके! अपि सुखस्त उद्यानव्यापारः? १.५

**मधुकरिका** अम्हो समाहिदिआ। सहि! सागअं दे। अहो समाहितिका। सखि! स्वागतं ते। १.६

**समाहितिका** हला! भअवदी आणवेदि अरित्तपाणिणा अम्हारि–सजणेण तत्तभोदी देवी देक्खिदव्वा। ता बीजऊरएण सुस्सूसिदुं इच्छामि त्ति। सखि! भगवत्याज्ञापयति–'अरिक्तपाणिना अस्मादृशजनेन तत्रभवती देवी द्रष्टव्या। तद् बीजपूरकेण शुश्रूषितुमिच्छामि' इति। १.७

**मधुकरिका** णं संणिहिदं बीअऊरअं। कहेहि दाव अण्णोण्ण–संघरिसिदाणं णट्टाआरिणं उवदेसं देक्खिअ कदरो भअवदिए पसंसिदो? ननु संनिहितं बीजपूरकम्। कथय तावदन्योन्यसंघर्षितयोर्नाट्याचार्ययो– रुपदेशं दृष्ट्वा कतरो भगवत्या प्रशंसितः? १.८

**समाहितिका** दुवे वि किल आगमिणा पओअणिउणा अ। किंतु सिस्साए मालविआए गुणविसेसेण गणदासस्स उवदेसो पसंसिदो। द्वावपि किलागमिनौ प्रयोगनिपुणौ च। किंतु शिष्याया मालविकाया गुणविशेषेण गणदासस्योपदेशः प्रशंसितः। १.९

**मधुकरिका** अह मालविआगदं कोलीणं कीरिसं सुणीअदि? अथ मालविकागतं कौलीनं कीदृशं श्रूयते? १.१०

**समाहितिका** बलीअं किल साहिलासो तस्सिं भट्टा। किंतु केवलं देविए धारिणीए चित्तं रक्खन्तो अत्तणो पहुत्तणं दंसेदि। मालविआ वि इमेसु दिअसेसु अणुभूदमुत्ता विअ मालदीमाला मिलाणा लक्खीअदि। अदो वरं ण जाणे। विसज्जेहि मं। बलीयः किल साभिलाषस्तस्यां भर्ता। किन्तु केवलं देव्या धारिण्याश्चित्तं रक्षन्नात्मनः प्रभुत्वं दर्शयति। मालविकाप्येषु दिवसेष्वनुभूतमुक्तेव मालतीमाला म्लाना लक्ष्यते। अतः परं न जाने। विसृज माम्। १.११

**मधुकरिका** एदं साहावलंबिदं बीजऊरअं गेण्ह। एतच्छाखा–वलम्बितं बीजपूरकं गृहाण। १.१२

**समाहितिका** तधा। *नाट्येन बीजपूरकं गृहीत्वा* हला तुमं वि अदो पेसलदरं साहुजणसुस्सूसाए फलं पावेहि। तथा। *प्रस्थिता* (नाट्येन बीजपूरकं गृहीत्वा) सखि! त्वमप्यतः पेशलतरं साधुजनशुश्रूषायाः फलं प्राप्नुहि। (प्रस्थिता) १.१३

**मधुकरिका** हला! समं जेव गच्छम्ह। अहं वि इमस्स चिराअमाणकुसुमोग्गमस्स तवणीआसोअस्स दोहद–णिमित्तं देवीए णिवेदेमि। सखि! सममेव गच्छावः। अहमप्यस्य चिरायमाणकुसुमोद्गमस्य तपनीयाशोकस्य दोहदनिमित्तं देव्यै निवेदयामि। १.१४

**समाहितिका** जुज्जइ। अहिआरो क्खु तुइ। युज्यते। अधिकारः खलु तव। १.१५

*निष्क्रान्ते* १.१६

*।। इति प्रवेशकः।।* १.१७

## ।। अथ तृतीयोऽङ्कः।। १.१८

।।२।।

*ततः प्रविशति कामयमानावस्थो राजा विदूषकश्च* १.१९

**राजा** *आत्मानं विलोक्य* १.२०

शरीरं क्षामं स्यादसति दयिताऽऽलिङ्गनसुखे
भवेत् सास्रं चक्षुः क्षणमपि न सा दृश्यत इति ।
तया सारङ्गाक्ष्या त्वमसि न कदाचिद् विरहितं
प्रसक्ते निर्वाणे हृदय! परितापं व्रजसि किम् ।।१।।

**विदूषकः** अलं भवदो धीरदं उज्झिअ परिदेविदेण। दिट्ठा मए तत्तहोदीए मालविआए पिअसही बउलावलिआ सुणाविदा अ अत्थं जो भवदा संदिट्ठो। अलं भवतो धीरतामुज्झित्वा परिदेवितेन। दृष्टा मया तत्रभवत्या मालविकायाः प्रियसखी बकुलावलिका श्राविता चार्थं यो भवता संदिष्टः। २.१

**राजा** ततः किमुक्तवती? २.२

**विदूषकः** विण्णवेहि भट्टारअं 'अणुग्गहीदम्हि इमिणा णिओएण। किंदु सा तवस्सिणी देवीए अहिअं रक्खन्तीए णाअरक्खिदो विअ णिही न सुहं समासादइदव्वा। तह वि जदिस्सं' त्ति। विज्ञापय भट्टारकम्– 'अनुगृहीतास्म्यनेन नियोगेन। किन्तु सा तपस्विनी देव्या अधिकं रक्षन्त्या नागरक्षित इव निधिर्न सुखं समासादयितव्या। तथापि, यतिष्ये' इति।२.३

**राजा** भगवन् संकल्पयोने! प्रतिबन्धवत्स्वपि विषयेषु अभिनिवेश्य तथा प्रहरसि यथा जनोऽयं न कालान्तरक्षमो भवति। सविस्मयम्, २.४

क्व रुजा हृदयप्रमाथिनी क्व
च ते विश्वसनीयमायुधम् ।
मृदु तीक्ष्णतरं यदुच्यते
तदिदं मन्मथ! दृश्यते त्वयि ।।२।।

**विदूषकः** णं भणामि तस्सिं साहणिज्जे कज्जे किदो मए उवाओवक्खेओ। ता पज्जवत्थावेदु भवं अप्पाणं। ननु भणामि तस्मिन् साधनीये कार्ये कृतो मया उपायोपक्षेपः। तत् पर्यवस्थापयतु भवानात्मानम्। ३.१

**राजा** अथेमं दिवसशेषम् उचितव्यापारविमुखेन चेतसा क्व नु खलु यापयामि। ३.२

**विदूषकः** अज्ज एव्व पढमावदारसुहआणि रत्तकुरवआणि उवाअणं पेसिअ नववसंतावदारव्वदेसेण इरावदीए णिउणिआमुहेण पत्थिदो भवं इच्छामि अज्जउत्तेण सह दोलाहिरोहणं अणुहविदुं त्ति। भवदा वि से पडिण्णादं। ता पमदवणं जेव गच्छम्ह। अद्यैव प्रथमावतारसुभगानि रक्तकुरबकाणि उपायनं प्रेष्य नववसन्तावतारव्यपदेशेन इरावत्या निपुणिकामुखेन प्रार्थितो भवान्– 'इच्छामि आर्यपुत्रेण सह दोलाधिरोहणमनुभवितुमिति। भवताप्यस्यै प्रतिज्ञातम्। तत् प्रमदवनमेव गच्छावः। ३.३

**राजा** न क्षममिदम्। ३.४

**विदूषक:** कहं विअ? कथमिव? ३.५

**राजा** वयस्य! निसर्गनिपुणा: स्त्रिय:। कथमन्यसंक्रान्तहृदय–मुपलालयन्तमपि ते सखी न मां लक्षयिष्यति। अत: पश्यामि ३.६

**उचित: प्रणयो वरं विहन्तुं**
**बहव: खण्डनहेतवो हि दृष्टा: ।**
**उपचारविधिर्मनस्विनीनां न**
**तु पूर्वाभ्यधिकोऽपि भावशून्य: ।। ३ ।।** इति।। ४.१

**विदूषक:** णारिहिदि भवं अंतेउरट्ठिदं दक्खिणं एक्कपदे पिट्ठदो कादुं। नार्हति भवानन्त:पुरस्थितं दाक्षिण्यमेकपदे पृष्ठत: कर्तुम्।४.२

**राजा** *विचिन्त्य* तेन हि प्रमदवनमार्गमादेशय। ४.३

**विदूषक:** इदो इदो भवं। इत इतो भवान्। ४.४

**उभौ** *परिक्रामत:* ४.५

**विदूषक:** णं एदं पमदवणं पवणबलचलाहिं पल्लवङ्गुलीहिं तुवरदि विअ भवंतं पविसिदुं। नन्वेतत् प्रमदवनं पवनबल–चलाभि: पल्लवाङ्गुलीभिस्त्वरयतीव भवन्तं प्रवेष्टुम्। ४.६

**राजा** *स्पर्श रूपयित्वा* अभिजात: खलु वसन्त:।सखे! पश्य– ४.७

**आमत्तानां श्रवणसुभगै: कूजितै: कोकिलानां**
**सानुक्रोशं मनसिजरुज: सह्यतां पृच्छतेव ।**
**अङ्गे चूतप्रसवसुरभिर्दक्षिणो मारुतो मे**
**सान्द्रस्पर्श: करतल इव व्यापृतो माधवेन ।।४।।**

**विदूषक:** पविस णिव्वुदिलाहाअ। प्रविश निर्वृतिलाभाय। ५.१

**उभौ** *परिक्रामत:* ५.२

**विदूषक:** अवहाणेण दिट्ठिं देहि। एदं क्खु भवंदं विअ विलोहइदुकामए पमदवणलच्छीए जुवदीवेसलज्जा–वइत्तिअं वसंतकुसुमणेवत्थं गहीदं। अवधानेन दृष्टिं देहि। एतत् खलु भवन्तमिव विलोभयितुकामया प्रमदवनलक्ष्म्या युवतिवेषलज्जापयितृकं वसन्तकुसुमनेपथ्यं गृहीतम्। ५.३

**राजा** ननु विस्मयादवलोकयामि ५.४

**रक्ताशोकलताविशेषितगुणो[1] बिम्बाधरालक्तक:**
**प्रत्याख्यातविशेषकं कुरबकं श्यामावदातारुणम् ।**
**आक्रान्ता तिलकक्रिया च तिलकैर्लग्नद्विरेफाञ्जनै:**
**सावज्ञेव मुखप्रसाधनविधौ श्रीर्माधवी योषिताम्।। ५।।**

**उभौ** *नाट्येनोद्यानशोभां निर्वर्णयत:।* ६.१

**।। ३ ।।**

*तत: प्रविशति पर्युत्सुका मालविका* ६.२

**मालविका** अविण्णादहिअअं भट्टारअं अहिलसंदी अत्तणो वि दाव लज्जेमि। कुदो विहवो सिणिद्धस्स सहीजणस्स इमं वुत्तंतं आचक्खिदुं। ण जाणे अप्पडिआरगरुजं वेदणं केत्तिअं कालं मदणो मं णइस्सदि त्ति। *कतिचित् पदानि गत्वा* अध कहिं क्खु पत्थिदम्हि? *स्मृतिमभिनीय* आं आदिट्ठम्हि देविए गोदमचापलादो दोलापरिब्भट्टाए सरुजा मह चरणा। तुमं दाव गदुअ तवणीआसोअस्स दोहदं णिव्वट्टेहि त्ति। जइ सो पंचरत्तब्भंतरे कुसुमं दंसेदि तदो अहं तुह *अन्तरा नि:श्वस्य* अहिलासपूरइत्तअं पसादं दावइस्सं त्ति। जाव णिओअभूमिं पढमं गदा होमि। जाव अणुपदं मह चरणालंकारहत्थाए बउलावलिआए आअन्दव्वं परिदेवइस्सं दाव वीसद्धं मुहुत्तअं। *परिक्रामति*। अविज्ञातहृदयं भर्तारमभिलषन्ती आत्मनोऽपि तावल्लज्जे। कुतो विभव: स्निग्धस्य सखीजनस्य इमं वृत्तान्तमाख्यातुम्। न जाने अप्रतीकारगुरुकां वेदनां कियन्तं कालं मदनो मां नेष्यति इति। *(कतिचित् पदानि गत्वा)* अथ कुत्र खलु प्रस्थितास्मि? *(स्मृतिमभिनीय)* आम् आदिष्टास्मि देव्या– गौतमचापलाद् दोलापरिभ्रष्टाया: सरुजौ मम चरणौ। त्वं तावद् गत्वा तपनीयाशोकस्य दोहदं निर्वर्तयेति। यद्यसौ पञ्चरात्राभ्यन्तरे कुसुमं दर्शयति ततस्तुभ्यमहम् *(अन्तरा नि:श्वस्य)* अभिलाषपूरयितृकं प्रसादं दापयिष्यामीति। यावन्नियोगभूमिं प्रथमं गता भवामि। यावदनुपदं मम चरणालङ्कारहस्तया वकुलावलिकया आगन्तव्यम्, परिदेविष्ये तावद् विस्रब्धं मुहूर्तकम्।*(परिक्रामति)* ६.३

**विदूषक:** *दृष्ट्वा* ही ही । वअस्स इअं क्खु सीधुपाणुव्वेजिदस्स मच्छण्डिआ उवणदा। आश्चर्यमाश्चर्यम्। वयस्य! इयं खलु सीधुपानोद्वेजितस्य मत्स्यण्डिकोपनता। ६.४

**राजा** अये किमेतत्? ६.५

**विदूषक:** एसा णादिपरिक्खिदवेसा ऊसुअवअणा एकाइणी मालविआ अदूरे वट्टदि। एषा नातिपरिष्कृतवेषा उत्सुकवदना एकाकिनी मालविका अदूरे वर्तते। ६.६

**राजा** *सहर्षं* कथं मालविका? ६.७

**विदूषक:** अह इं। अथ किम्। ६.८

**राजा** शक्यमिदानीं जीवितमवलम्बितुम् — ६.९

**त्वदुपलभ्य समीपगतां प्रियां**
**हृदयमुच्छ्वसितं मम विक्लवम् ।**
**तरुवृतां पथिकस्य जलार्थिन:**
**सरितमारसितादिव सारसात् ।। ६।।**

अथ क्व तत्रभवती? ७.१

**विदूषक:** एसा णं तरुराइमज्झादो णिक्कंता इदो ज्जेव्व परिवट्टन्ती दीसइ। एषा ननु तरुराजिमध्यान्निष्क्रान्ता इत एव परिवर्तमाना दृश्यते। ७.२

**राजा** *विलोक्य सहर्षं* वयस्य! पश्याम्येनाम्। ७.३

**विपुलं नितम्बदेशे मध्ये क्षामं समुन्नतं कुचयो: ।**
**अत्यायतं नयनयोर्मम जीवितमेतदायाति ।। ७।।**

सखे! अवस्थान्तरमुपरूढा तत्रभवती। तथाहि– ८.१

**शरकाण्डपाण्डुगण्डस्थलेयमाभाति परिमिताभरणा ।**
**माधवपरिणतपत्रा कतिपयकुसुमेव कुन्दलता ।। ८।।**

**विदूषक:** एसा वि भवं विअ मअणव्वाहिणा परामिट्ठा भविस्सदि। एषापि भवानिव मदनव्याधिना परामृष्टा भविष्यति। ९.१

**राजा** सौहार्दमेवं पश्यति। ९.२

**मालविका** अअं सो ललिदसुउमारदोहदापेक्खी अगहीदकुसुमणेवत्थो

---

१. लतावि इति तारानाथ:, रुचा वि इति निर्णयसागर:, काप्र.।

उक्कंठिदाए मह अणुकरेदि असोओ। जाव एदस्स पच्छाअसीदले सिलापट्टए णिसण्णा अत्ताणं विणोदेमि। अयं स ललितसुकुमारदोहदापेक्षी अगृहीतकुसुम–नेपथ्यः उत्कण्ठितताया मम अनुकरोत्यशोकः। यावदस्य प्रच्छायशीतले शिलापट्टके निषण्णा आत्मानं विनोदयामि। ९.३

विदूषकः सुदं भवदा उक्कण्ठिदम्हि त्ति अत्तभोदी मंतेदि। श्रुतं भवता, उत्कण्ठितास्मीति अत्रभवती मन्त्रयति। ९.४

राजा नैतावता भवन्तं प्रसन्नतर्कं मन्ये। कुतः — ९.५

वोढा कुरवकरजसां किसलयपुटभेदसीकरानुगतः।
अनिमित्तोत्कण्ठामपि जनयति मनसो मलयवातः॥९॥

मालविका *उपविष्टा* १०.१

राजा सखे! इतस्तावत्। आवां लतान्तरितौ भवावः। १०.२

विदूषकः इरावदिं विअ अदूरे पेक्खामि। इरावतीमिवादूरे प्रेक्षे। १०.३

राजा नहि कमलिनीं दृष्ट्वा ग्राहमवेक्षते मतङ्गजः। *विलोकयन् स्थितः* १०.४

मालविका हिअअ! णिवरलंबणादो अदिभूमिलंघिणो मणोरधादो विरम। किं मं आआसिअ। हृदय! निरवलम्बनाद् अतिभूमिलङ्घिनो मनोरथाद् विरम। किं मामायास्य? १०.५

विदूषकः *राजानं वीक्षते* १०.६

राजा पश्य वामत्वं स्नेहस्य — १०.७

औत्सुक्यहेतुं विवृणोषि न त्वं
तत्त्वावबोधैकफलो न तर्कः।
तथापि रम्भोरु! करोमि लक्ष्य–
मात्मानमेषां परिदेवितानाम् ॥१०॥

विदूषकः संपदं भवदो णिस्संसअं भविस्सदि। एसा अप्पिदमअणसंदेसा विवित्ते णं बउलावलिआ उवट्ठिदा। सांप्रतं भवतो निःसंशयं भविष्यति। एषा अर्पितमदनसंदेशा विविक्ते ननु बकुलावलिकोपस्थिता। ११.१

राजा अपि स्मरेदसावस्मदभ्यर्थनाम्? ११.२

विदूषकः किं दाणिं एसा दासीए दुहिदा तुह गरुअं संदेसं विसुमरेदि? अहं वि दाव ण विसुमरेमि। किमिदानीमेषा दास्या दुहिता तव गुरुकं संदेशं विस्मरति? अहमपि तावत्र विस्मरामि। ११.३

*प्रविश्य चरणालङ्कारहस्ता* ११.४

बकुलावलिका अवि सुहं सहिए? अपि सुखं सख्याः? ११.५

मालविका अंहो बकुलावलिका। सहि! सागदं दे। उवविस। अहो बकुलावलिका। सखि! स्वागतं ते। उपविश। ११.६

बकुलावलिका *उपविश्य* हला! तुमं दाणिं देवीए जोग्गदाए दोहदकलणे णिउत्ता। ता एक्कं दे चरणं उवणेहि जाव णं सालक्तअं सणूउरं अ करेमि। सखि! त्वमिदानीं देव्या योग्यतया दोहदकरणे नियुक्ता। तदेकं ते चरणमुपनय यावदेनं सालक्तकं सनूपुरं च करोमि। ११.७

मालविका *आत्मगतम्* हिअअ! अलं सुहिदाए उवट्ठिदो अअं विहवो त्ति। कहं दाणिं अत्ताणं मोचेअं। अधवा एदं एव्व मे मिच्चुमंडणं हविस्सदि। हृदय! अलं सुखिततया उपस्थितोऽयं विभव इति। कथमिदानीमात्मानं मोचयेयम्। अथवा एतदेव मे मृत्युमण्डनं भविष्यति। ११.८

बकुलावलिका सहि! किं विआरेसि? ऊसुआ क्खु एदस्स तवणीआसोअस्स कुसुमुग्गमे देई। सखि! किं विचारयसि? उत्सुका खल्वस्य तपनीयाशोकस्य कुसुमोद्गमेन देवी। ११.९

राजा कथमशोकदोहदनिमित्तोऽयमारम्भः? ११.१०

विदूषकः किं णु क्खु जाणासि तुमं मह कारणादो देवी इमं अंतेउरणेवच्छेण जोजइस्सदि त्ति। किं नु खलु जानासि त्वम् मम कारणाद् देवी इमामन्तःपुरनेपथ्येन योजयिष्यती–ति। ११.११

मालविका हला! मरिसेहि दाव णं। *पादमुपहरति।* सखि! मर्षय तावदेनम्। ११.१२

बकुलावलिका अइ सरीरअं सि मे। *नाट्येन चरणसंस्कारमारभते।* अयि शरीरमसि मे। ११.१३

राजा ११.१४

चरणान्तनिवेशितां प्रियायाः
सरसां पश्य वयस्य रागरेखाम्।
प्रथमामिव पल्लवप्रसूतिं
हरदग्धस्य मनोभवद्रुमस्य ॥११॥

विदूषकः चरणाणुरूवो क्खु तत्तहोदीओ अहिआरो उवक्खित्तो। चरणानुरूपः खलु तत्रभवत्या अधिकार उपक्षिप्तः। १२.१

राजा सम्यगाह भवान्। १२.२

नवकिसलयरागेणाग्रपादेन बाला
स्फुरितनखरुचा द्वौ हन्तुमर्हत्यनेन।
अकुसुमितमशोकं दोहदापेक्षया
वा प्रणमितशिरसं वा कान्तमार्द्रापराधम् ॥१२॥

विदूषकः पहरिस्सदि तत्तहोदी तुमं अवरद्धम्। प्रहरिष्यति तत्रभवती त्वामपराद्धम्। १३.१

राजा प्रतिगृहीतं वचः सिद्धिदर्शिनो ब्राह्मणस्य। १३.२

॥ ४ ॥

*ततः प्रविशति युक्तमदा इरावती चेटी च* १३.३

इरावती हञ्जे णिउणिए! सुणामि बहुसो मदो किल इत्थिआजणस्स विसेसमंडणं त्ति। अवि सच्चो एसो लोअवादो? सखि निपुणिके! शृणोमि बहुशो मदः किल स्त्रीजनस्य विशेषमण्डनमिति। अपि सत्य एष लोकवादः? १३.४

निपुणिका पढमं लोअवादो येव्व, अज्ज उण सच्चो संवुत्तो। प्रथमं लोकवाद एव, अद्य पुनः सत्यः संवृत्तः। १३.५

इरावती अलं मइ सिणेहेण। कुदो दाणिं ओगतव्वं दोलाघरं पढमं गदो भट्टा ण वे त्ति। अलं मयि स्नेहेन। कथय कुत

इदानीमवगन्तव्यं दोलागृहं प्रथमं गतो भर्ता न वेति। १३.६

**निपुणिका** भट्टिणीए अखंडिदादो पणआदो। भट्टिन्या अखण्डितात् प्रणयात्। १३.७

**इरावती** अलं सेवाए। मज्झत्थदं परिगहिअ भणाहि। अलं सेवया। मध्यस्थतां परिगृह्य भण। १३.८

**निपुणिका** वसंदोवाअणलोलुवेण अज्जगोदमेण कहिअं। तुवरदु भट्टिणी।वसन्तोपायनलोलुपेनार्यगौतमेन कथितम्।त्वरतां भट्टिनी। १३.९

**इरावती** *अवस्थासदृशं परिक्रम्य* हञ्जे! मदेण किलामिअमाणं अत्ताणं अज्जउत्तस्स दंसणे हिअअं तुवरेदि, चरणा उण ण मह पसरंदि। चेटि! मदेन क्लाम्यमानमात्मानमार्य–पुत्रस्य दर्शने हृदयं त्वरयति, चरणौ पुनर्न मम प्रसरतः। १३.१०

**निपुणिका** णं संपत्ते म्ह डोलाघरं। ननु संप्राप्ते स्वो दोलागृहम्। १३.११

**इरावती** णिउणिए ण एत्थ अज्जपुत्तो दीसदि। निपुणिके! नात्र आर्यपुत्रो दृश्यते। १३.१२

**निपुणिका** णं आलोअदु भट्टिणी। परिहासणिमित्तं कहिं वि गूढेण भत्तुणा होदव्वं। अम्हे वि पिअंगुलदापरिक्खित्तं असोअसिलापट्टअं पविसामो। ननु अवलोकयतु भट्टिनी। परिहासनिमित्तं कुत्रापि गूढेन भर्त्रा भवितव्यम्। आवामपि प्रियङ्गुलतापरिक्षिप्तमशोकशिलापट्टकं प्रविशावः। १३.१३

**इरावती** तह। तथा। १३.१४

**निपुणिका** *परिक्रम्य विलोक्य च* आलोअदु भट्टिणी चूदंकुरं विचिण्णंतीणं अम्हाणं पिपीलिआहिं दंसिदं। अवलोकयतु भट्टिनी चूताङ्कुरं विचिन्वत्योः आवयोः पिपीलिकाभिर्दष्टम्। १३.१५

**इरावती** कधं विअ एदं? कथमिवेदम्। १३.१६

**निपुणिका** एसा बउलावलिआ असोअपादवच्छआए मालविआए चरणालंकारं णिव्वट्टेदि। एषा बकुलावलिका अशोकपादप–च्छायायां मालविकाया चरणालङ्कारं निर्वर्तयति। १३.१७

**इरावती** *शङ्कां रूपयित्वा* अभूमी इअं मालविआए। कहिं एत्थ तक्केसि? अभूमिरियं मालविकायाः। कथमत्र तर्कयसि।१३.१८

**निपुणिका** तक्केमि दोलापरिब्भंसिदाए सरुअचलणाए देवीए असोअदोहदाहिआरे मालविआ णिउत्ते त्ति। अण्णहा कधं देवी सअं धारिअं णेउरजुअलं परिअणस्स अब्भणुजाणिस्सदि। तर्कयामि दोलापरिभ्रष्टया सरुजचरणया देव्याऽशोकदोहदाधिकारे मालविका नियुक्तेति। अन्यथा कथं देवी स्वयं धारितं नूपुरयुगलं परिजनायाभ्यनुज्ञास्यति। १३.१९

**इरावती** महदी क्खु से संभावणा।

महती खल्वस्याः संभावना। १३.२०

**निपुणिका** किं ण अण्णेसीअदि भट्टा? किं नान्विष्यते भर्ता। १३.२१

**इरावती** हला! ण मे चलणा अण्णदो पवट्टंदि। मओ मं विआरेदि। आसंकिदस्स दाव अंतं गमिस्सं। *मालविकां निरूप्य आत्मगतम्* ठाणे क्खु कादरं मे हिअअं। सखि! न मे चरणावन्यतः प्रवर्तेते। मदो मां विकारयति।आशङ्कितस्य तावदन्तं गमिष्यामि।*(मालविकां निरूप्य आत्मगतम्)* स्थाने खलु कातरं मे हृदयम्।१३.२२

**बकुलावलिका** *मालविकायै चरणं दर्शयन्ती* अवि रोअदि दे राअरेहा–विण्णासो? अपि रोचते ते रागरेखाविन्यासः? १३.२३

**मालविका** हला! अत्तणो चलणं त्ति लज्जेमि णं पसंसिदुं। केण वा पसाहणकलाए अहिविणीदासि? सखि! आत्मनश्चरण इति लज्जे एनं प्रशंसितुम्। केन वा प्रसा–धनकलायामभिविनीतासि? १३.२४

**बकुलावलिका** एत्थ क्खु भत्तुणो सीसम्मि। अत्र खलु भर्तुः शिष्यास्मि। १३.२५

**विदूषकः** तुवरेहि दाव णं गुरुदक्खिणाए। त्वरय तावदेनां गुरुदक्षिणायै। १३.२६

**मालविका** दिट्ठिआ ण गव्विदासि। दिष्ट्या न गर्वितासि। १३.२७

**बकुलावलिका** उवदेसाणुरूवा चरणा लंभिअ अज्ज दाव गव्विदा भविस्सं *रागं विलोक्य आत्मगतम्* हंत सिद्धो मह दप्पो। *प्रकाशम्* सहि! एकस्स दे चरणस्स अवसिदो राअणिक्खेवो। केवलं मुहमारुदो लंभइदव्वो। अध वा पवादं एदं ठाणं। उपदेशानुरूपौ चरणौ लब्ध्वा अद्य तावद् गर्विता भविष्यामि। (रागं विलोक्य आत्मगतम्) हन्त सिद्धो मे दर्पः। (प्रकाशम्) सखि! एकस्य ते चरणस्यावसितो रागनिक्षेपः। केवलं मुखमारुतो लम्भयितव्यः। अथवा प्रवातमेतत् स्थानम्। १३.२८

**राजा** सखे! पश्य १३.२९

**आर्द्रालक्तकमस्याश्चरणं मुखमारुतेन शोषयितुम्।**
**प्रतिपन्नः प्रथमतरः संप्रति सेवावकाशो मे।।१३।।**

**विदूषकः** कुदो दे अणुसओ? चिरं भवदा एदं अणुहविदव्वं अइरेण। कुतस्तेऽनुशयः? चिरं भवता एतत् अनुभवितव्यम् अचिरेण। १४.१

**बकुलावलिका** सहि! अरुणसदवत्तं विअ सोहइ दे चरणं। सव्वहा भत्तुणो अंकपरिवट्टिणी होहि। सखि! अरुणशतपत्रमिव शोभते ते चरणः। सर्वथा भर्तुरङ्कपरिवर्तिनी भव। १४.२

**इरावती** *निपुणिकामवेक्षते* १४.३

**राजा** ममेयमाशीः। १४.४

**मालविका** हला! मा अवअणीअं मंतेहि। सखि मा अवचनीयं मन्त्रयस्व। १४.५

**बकुलावलिका** मंतइदव्वं य्येव मंतिदं मए। मन्त्रयितव्यमेव मन्त्रितं मया। १४.६

**मालविका** पिआ क्खु अहं तुह। प्रिया खल्वहं तव। १४.७

**बकुलावलिका** ण केवलं मह। न केवलं मम। १४.८

**मालविका** कस्स वा अण्णस्स? कस्य वान्यस्य? १४.९

**बकुलावलिका** गुणेसु अहिणिवेसिणो भत्तुणो वि। गुणेष्वभिनिवेशिनो भर्तुरपि। १४.१०

**मालविका** अलिअं मंतेसि। एदं य्येव्व मइ णत्थि। अलीकं मन्त्रयसे। एतदेव मयि नास्ति। १४.११

**बकुलावलिका** सच्चं तुइ णत्थि। भत्तुणो किसेसु दरपण्डरेसु दीसइ

अंगेसु। सत्यं त्वयि नास्ति। भर्तुः कृशेषु दरपाण्डुरेषु दृश्यते अङ्गेषु। १४.१२

**मालविका** पढमं गणिदं विअ हदासाए उत्तरं। प्रथमं गणितमिव हताशा(श)या उत्तरम्। १४.१३

**बकुलावलिका** अणुराओ अणुराएण पच्चेट्ठव्वो त्ति सुहिअवअणं पमाणीकरेहि। अनुरागोऽनुरागेण प्रत्येष्टव्य इति सुजनवचनं प्रमाणीकुरु। १४.१४

**मालविका** किं अत्तणो छन्देण मन्तेसि। किमात्मनश्छन्देन मन्त्रयसि। १४.१५

**बकुलावलिका** णहि णहि! भत्तुणो क्खु एदाइ पणयमिदुलाइं अक्खराइं वत्तंदरिदाइं। नहि नहि! भर्तुः खल्वेतानि प्रणयमृदुलान्यक्षराणि वक्त्रान्तरितानि। १४.१६

**मालविका** हला! देविं चिन्तिअ ण मे हिअअं विस्ससिदि। सखि! देवीं चिन्तयित्वा न मे हृदयं विश्वसिति। १४.१७

**बकुलावलिका** मुद्धे! भमरसंपादो भविस्सदि त्ति वसंतावदार-सव्वस्सं किं ण चूदप्पसवो ओदंसिदव्वो। मुग्धे! भ्रमरसंपातो भविष्यतीति वसन्तावतारसर्वस्वं किं न चूतप्रसवोऽवतंसितव्यः। १४.१८

**मालविका** तुमं दाव दुज्जादे गच्छंतस्स सहाइणी होहि। त्वं तावद् दुर्जाते गच्छन्त्या सहायिनी भव। १४.१९

**बकुलावलिका** विमद्दसुरही वउलावलिआ क्खु अहं। विमर्दसुरभिर्बकुलावलिका खल्वहम्। १४.२०

**राजा** साधु बकुलावलिके! साधु। १४.२१

**भावज्ञानानन्तरं प्रस्तुतेन**
**प्रत्याख्याने दत्तयुक्तोत्तरेण ।**
**वाक्येनेयं स्थापिता स्वे निदेशे**
**स्थाने प्राणाः कामिनां दूत्यधीनाः ॥१४॥**

**इरावती** हंजे! पेक्ख कारिदा य्येव्व बउलावलिआए एदस्सिं पदं मालविका। सखि! पश्य कारितैव बकुलावलिकया एतस्मिन् पदं मालविका। १५.१

**निपुणिका** भट्टिणि! अहिआरस्स उइदो वदेसो। भट्टिनि! अधिकारस्योचित उपदेशः/-चितोऽपदेशः। १५.२

**इरावती** ठाणे क्खु संकिदं मे हिअअं। गिहीदत्था अणंदरं चिंदइस्सं। स्थाने खलु शङ्कितं मे हृदयम्। गृहीतार्था अनन्तरं चिन्तयिष्यामि। १५.३

**बकुलावलिका** एसो दुदीओ वि दे णिवुत्तपडिकम्मा चरणो। जाव दुवे वि सणेउरे करेमि। *नाट्येन नूपुरयुगलमामुच्य* हला! उट्ठेहि असोअविआसइत्तअं देविए णिओअं अणुचिट्ठ। एष द्वितीयोऽपि ते निर्वृत्त-प्रतिकर्मा चरणः। यावद् द्वावपि सनूपुरौ करोमि। (नाट्येन नूपुरयुगलमामुच्य) हला! उत्तिष्ठ। अशोकविकासयितृकं देव्या नियोगमनुतिष्ठ। १५.४

**उभे** *उत्तिष्ठतः* १५.५

**इरावती** सुदो देविए णिओगो त्ति? होदु दाणिं। श्रुतो देव्या नियोग इति? भवत्विदानीम्। १५.६

**बकुलावलिका** एसो उपारूढराओ उअभोगक्खमो पुरतो दे वट्टइ। एष उपारूढराग उपभोगक्षमः पुरतस्ते वर्तते। १५.७

**मालविका** *सहर्षं* किं भट्टा? किं भर्ता ? १५.८

**बकुलावलिका** *सस्मितम्* ण दाव भट्टा। एसो असोअसाहावलंबी पल्लवगुच्छओ। ओदंसेहि दाव णं। न तावद् भर्ता। एषः अशोकशाखावलम्बी पल्लवगुच्छः। अवतंसय तावदेनम्। १५.९

**मालविका** *विषादं नाटयति।* १५.१०

**विदूषकः** अवि सुदं भवदा। अपि श्रुतं भवता। १५.११

**राजा** सखे! पर्याप्तमेतावता कामिनाम्। १५.१२

**अनातुरोत्कण्ठितयोः प्रसिद्ध्यता**
**समागमेनापि रतिर्न मां प्रति ।**
**परस्परप्राप्तिनिराशयोर् वरं**
**शरीरनाशोऽपि समानुरागयोः ॥१५॥**

**मालविका** *रचितपल्लवावतंसा पादमशोकाय प्रहिणोति।* १६.१

**राजा** वयस्य! १६.२

**आदाय कर्णकिसलयमियमस्मै चरणमरुणमर्पयति।**
**उभयोः सदृशविनिमयादन्योन्यमवञ्चितं मन्ये॥१६॥**

**मालविका** अवि णाम अम्हाणं संभावणा सफला भवे? १७.१ अपि नाम आवयोः सम्भावना सफला भवेत्?

**बकुलावलिका** हला! णत्थि दे दोसो। णिग्गुणो अअं असोओ जइ कुसमोब्भेदमंथरो भवे जो ईरिसं चरणसक्कारं लंभिदो। सखि! नास्ति ते दोषः। निर्गुणोऽयमशोकः यदि कुसुमोद्भेद-मन्थरो भवेत्, यः ईदृशं चरणसत्कारं लम्भितः। १७.२

**राजा** १७.३

**अनेन तनुमध्यया मुखरनूपुराराविणा**
**नवाम्बुरुहकोमलेन चरणेन संभावितः ।**
**अशोक! यदि सद्य एव मुकुलैर्न संपत्स्यसे**
**वृथावहसिदोहदं ललितकामिसाधारणम् ॥१७॥**

सखे! वचनानुसरणपूर्वकं प्रवेष्टुमिच्छामि। १८.१

**विदूषकः** एहि णं परिहासइस्सं। एहि एनां परिहासयिष्यामि। १८.२

**उभौ** *प्रवेशं कुरुतः।* १८.३

**निपुणिका** भट्टिणि भट्टिणि! भट्टा एत्थ पविसदि। भट्टिनि भट्टिनि! भर्तात्र प्रविशति। १८.४

**इरावती** एदं मह पढमं चिंतिदं हिअएण। एतन्मम प्रथमं चिन्तितं हृदयेन। १८.५

**विदूषकः** उपेत्य भोदि! जुत्तं णाम अत्तहोदो पिअवअस्सो अअं असोओ। णं वामपादेण ताडितुं। भवति! युक्तं नाम अत्रभवतः प्रियवयस्योऽयमशोको ननु वामपादेन ताडयितुम्। १८.६

**उभे** *ससंभ्रमम्* अम्हो भट्टा। अहो भर्ता। १८.७

**विदूषकः** बउलावलिए! गहीदत्थाए तुए अत्तभोदी ईरिसं अविणअं करेन्ती कीस ण णिवारिदा। बकुलावलिके! गृहीतार्थया त्वयात्रभवती ईदृशमविनयं कुर्वन्ती कस्मान्न

निवारिता। १८.८

**मालविका** *भयं नाटयति।* १८.९

**निपुणिका** भट्टिणि! पेक्ख किं पउत्तं अज्जगोदमेण। भट्टिणि! पश्य। किं प्रवृत्तमार्यगौतमेन। १८.१०

**इरावती** कधं णु बम्हबंधू अण्णहा जीविस्सदि? कथं खलु ब्रह्मबन्धुरन्यथा जीविष्यति? १८.११

**बकुलावलिका** अज्ज! एसा देविए णिओअं अणुचिट्ठदि। एदस्सिं अदिक्कमे परवदी इअं। पसीदद्दु भट्टा। आर्य! एषा देव्या नियोगमनुतिष्ठति। एतस्मिन्नतिक्रमे परवतीयम्। प्रसीदतु भर्ता। *आत्मना सहैनां प्रणिपातयति।* १८.१२

**राजा** यद्येवमनपराद्धासि। उत्तिष्ठ भद्रे!
*हस्तेन गृहीत्वैनामुत्थापयति* १८.१३

**विदूषकः** जुज्जइ देवी एत्थ माणइदव्वा। युज्यते देवी अत्र मानयितव्या। १८.१४

**राजा** *विहस्य* १८.१५

**किसलयमृदोर्विलासिनि! कठिने**
**निहतस्य पादपस्कन्धे।**
**चरणस्य न ते बाधा**
**संप्रति वामोरु! वामस्य ॥१८॥**

**मालविका** *लज्जां नाटयति* १९.१

**इरावती** *सासूयम्* अहो णवणीदकप्पहिअओ अज्जउत्तो। (सासूयम्) अहो नवनीतकल्पहृदय आर्यपुत्रः। १९.२

**मालविका** बउलावलिए! एहि, अणुठ्ठिदं अत्तणो णिओअं देवीए णिवेदेम्ह। बकुलावलिके! एहि, अनुष्ठितमात्मनो नियोगं देव्यै निवेदयावः। १९.३

**बकुलावलिका** विण्णवेहि भट्टारं विसज्जेहि त्ति। विज्ञापय भर्तारं विसर्जयेति। १९.४

**राजा** भद्रे! यास्यसि। मम तावदुत्पन्नावसरमर्थित्वं श्रूयताम्। १९.५

**बकुलावलिका** अवहिदा सुणाहि। आणवेदु भट्टा। अवहिता शृणु। आज्ञापयतु भर्ता। १९.६

**राजा** १९.७

**धृतिपुष्पमयमपि जनो**
**बध्नाति न तादृशं चिरात् प्रभृति।**
**स्पर्शामृतेन पूरय**
**दोहदमस्याप्यनन्यरुचेः ॥१९॥**

**इरावती** *सहसोपसृत्य* पूरेहि पूरेहि। असोओ कुसुमं ण दंसेदि। अअं उण पुप्फदि येव्व। पूरय पूरय। अशोकः कुसुमं न दर्शयति। अयं पुनः पुष्पत्येव। २०.१

**सर्वे** *इरावतीं दृष्ट्वा संभ्रान्ताः* २०.२

**राजा** *अपवार्य* वयस्य! का प्रतिपत्तिरत्र? २०.३

**विदूषकः** किं अण्णं। जंघाबलं ज्जेव्व। किमन्यत्। जङ्घाबलमेव। २०.४

**इरावती** बउलावलिए! तुए साहु उवक्कंतं। मालविए! तुमं दाव सहलब्भत्थणं करेहि अज्जउत्तं। बकुलावलिके! त्वयासाधूपक्रान्तम्। मालविके! त्वं तावत् सफलाभ्यर्थनं कुरु आर्यपुत्रम्। २०.५

**उभे** पसीदद्दु भट्टिणी। के अम्हे भत्तुणो पणअपरिग्गहस्स? प्रसीदतु भट्टिनी। के आवां भर्तुः प्रणयपरिग्रहस्य?
*निष्क्रान्ते* २०.६

**इरावती** अहो अविस्ससणिज्जा पुरिसा। मए क्खु अत्तणो वंचणावअणं पमाणीकदुअ वाहगीदरत्ताए हिरणीए विअ असंकिदाए एदं ण विण्णादं। अहो अविश्वसनीयाः पुरुषाः, मया खलु आत्मनो वञ्चनावचनं प्रमाणीकृत्य व्याधगीतरक्तया हरिण्येव अशङ्कितया एतन्न विज्ञातम्। २०.७

**विदूषकः** *जनान्तिकं* भो पडिवज्जेहि किंपि। कम्मगिहीदेण वि कुंभीलएण संधिच्छदे सिक्खिओ म्हि त्ति वत्तव्वं होदि। (जनान्तिकं) भो प्रतिपद्यस्व किमपि। कर्मगृहीतेनापि कुम्भीलकेन संधिच्छेदे शिक्षितोऽस्मीति वक्तव्यं भवति। २०.८

**राजा** सुन्दरि! न मे मालविकया कश्चिदर्थः। मया त्वं चिरयसीति कथञ्चिदात्मा विनोदितः। २०.९

**इरावती** विस्ससणीओसि। ण मए विण्णादं ईरिसं विणोदवत्थुअं अज्जउत्तेण उवलब्धं त्ति। अण्णहा मंदभाइणीए एव्वं ण करीअदि। विश्वसनीयोऽसि। न मया विज्ञातम् ईदृशं विनोदवस्तु आर्यपुत्रेणोपलब्धमिति। अन्यथा मन्दभागिन्या एवं न क्रियेत। २०.१०

**विदूषकः** मा दाव अत्तभोदी अत्तभोदो दक्खिण्णस्स उवरोहं करेहि। समावत्तिदिट्ठेण देविए परिचारिआजणेण संकधावि जइ अवराहो ठावीअदि एत्थ तुमं येव्व प्पमाणं। मा तावदत्रभवती अत्रभवतो दाक्षिण्यस्योपरोधं कुरु। समापत्तिदृष्टेन देव्याः परिचारिकाजनेन संकथापि यदि अपराधः स्थाप्यते अत्र त्वमेव प्रमाणम्। २०.११

**इरावती** ण संकहा णाम होदु। किंत्ति अत्ताणं आआसइस्सं। *रुषा प्रस्थिता* ननु संकथा नाम भवतु। किमित्यात्मानमायासयिष्यामि। (रुषा प्रस्थिता) २०.१२

**राजा** *अनुसरन्* प्रसीदतु भवती। २०.१३

**इरावती** *रसनाधारितचरणा व्रजत्येव* २०.१४

**राजा** सुन्दरि! न शोभते प्रणयिजने निरपेक्षता। २०.१५

**इरावती** सठ! अविस्ससणिज्जहिअओसि। शठ! अविश्वसनीयहृदयोऽसि। २०.१६

**राजा** २०.१७

**शठ इति मयि तावदस्तु ते**
**परिचयवत्यवधीरणा प्रिये!।**
**चरणपतितया न चण्डि! तां**
**विसृजसि मेखलयापि याचिता? ॥२०॥**

**इरावती** इअं वि हदासा तुमं एव्व अणुसरदि। *रसनामादाय राजानं ताडयितुमिच्छति* इयमपि हताशा त्वामेवानुसरति। २१.१

**राजा** *विदूषकं प्रति* वयस्य! इयमिरावती — २१.२

**बाष्पासारा हेमकाञ्चीगुणेन**
**श्रोणीबिम्बादप्युपेक्षाच्युतेन।**

चण्डी चण्डं हन्तुमभ्युद्यता मां
विद्युद्दाम्ना मेघराजीव विन्ध्यम् ॥ २१॥

**इरावती** किं मं एव्व भूओ वि अवरद्धं करेसि? किं मामेव भूयोऽप्यपराद्धां करोषि? २२.१

**राजा** *इरावत्याः सरसनं हस्तमवलम्बते* २२.२

अपराधिनि मयि दण्डं संहरसि
किमुद्यतं कुटिलकेशि !
वर्धयसि विलसितं त्वं
दासजनायात्र कुप्यसि च ॥ २२॥

*आत्मगतम्* नूनमिदमिदानीमनुज्ञातम्। *पादयोः पतति* २३.१

**इरावती** ण क्खु इमे मालविआचलणा जा दे फरिसदोहदं पूरइस्संति। *निष्क्रान्ता सह चेट्या* । न खल्विमौ मालविकाचरणौ यौ ते स्पर्शदोहदं पूरयिष्यतः। २३.२

**विदूषकः** उट्ठेहि किदप्पसादो सि। उत्तिष्ठ। कृतप्रसादोऽसि। २३.३

**राजा** *उत्थाय इरावतीमपश्यन्* कथं गतैव प्रिया। २३.४

**विदूषकः** वअस्स! दिट्ठिआ इमस्स अविणअस्स अप्पसण्णा गदा एसा। ता वअं सिग्घं अवक्कमाम जाव अंगारको रासिं विअ अणुवंकं परिगमणं ण करेदि। वयस्य! दिष्ट्या अनेनाविनयेन अप्रसन्ना गतैषा। तद् वयं शीघ्रमपक्रमामः यावदङ्गारको राशिमिवानुवक्रं प्रतिगमनं न करोति। २३.५

**राजा** अहो मदनस्य वैषम्यम्। २३.६

मन्ये प्रियाहृतमनास्तस्याः प्रणिपातलङ्घनं सेवाम् ।
एवं हि प्रणयवती सा शक्यमुपेक्षितुं कुपिता॥ २३॥

*निष्क्रान्तः सह वयस्येन* २४.१

इतै महाकविकालिदासकृतौ मालविकाग्निमित्रे नाटके तृतीयोऽङ्कः॥ ३॥[२] २४.२

॥ अथ चतुर्थोऽङ्कः॥ १.१

॥१॥

*ततः प्रविशति पर्युत्सुको राजा प्रतीहारी च* १.२

**राजा** *आत्मगतम्* १.३

तामाश्रित्य श्रुतिपथगतामाशया बद्धमूलः
संप्राप्तायां नयनविषयं रूढरागप्रवालः ।
हस्तस्पर्शैर्मुकुलित इव व्यक्तरोमोद्गमत्वात्
कुर्यात् क्लान्तं मनसिजतरुर्मा रसज्ञं फलस्य ॥१॥

*प्रकाशम्* सखे गौतम! २.१

**प्रतीहारी** *प्रविश्य* जेदु जेदु भट्टा। असंणिहिदो गोदमो। जयतु जयतु भर्ता। असंनिहितो गौतमः। २.२

**राजा** *आत्मगतम्* आः मालविकावृत्तान्तज्ञानाय मया प्रेषितः। २.३

**विदूषकः** *प्रविश्य* वड्ढदु भवं। वर्धतां भवान्। २.४

**राजा** जयसेने! जनीहि तावत् क्व वा देवी धारिणी कथं वा सरुजचरणत्वाद् विनोद्यत इति। २.५

**प्रतीहारी** जं देवो आणवेदि। *निष्क्रान्ता* यद् देव आज्ञापयति। २.६

**राजा** गौतम! को वृत्तान्तस्तत्रभवत्यास्ते सख्याः? २.७

**विदूषकः** जो बिडालपरिगहीदाए परहुदिआए। यो बिडालगृहीतायाः परभृतिकायाः। २.८

**राजा** *सविषादम्* कथमिव? २.९

**विदूषकः** सा क्खु तवस्सिणी ताए पिंगलक्खीए सारभण्डभूघरए मिच्चुमुहे विअ णिक्खित्ता। सा खलु तपस्विनी तया पिङ्गलाक्ष्या सारभाण्डभूगृहे मृत्युमुख इव निक्षिप्ता। २.१०

**राजा** ननु मत्संपर्कमुपलभ्य? २.११

**विदूषकः** अध इं? अथ किम्? २.१२

**राजा** क एवं विमुखोऽस्माकं येन चण्डीकृता देवी? २.१३

**विदूषकः** सुणादु भवं परिव्वाजिआ मे कधेदि। हिओ किल तत्तभोदी इरावदी रुआक्कंतचरणं देविं सुहपुच्छिआ आअदा। शृणोतु भवान् परिव्राजिका मे कथयति। ह्यः किल तत्रभवती इरावती रुजाक्रान्तचरणां देवीं सुखपृच्छिका आगता। २.१४

**राजा** ततस्ततः? २.१५

**विदूषकः** तदो सा देविए पुच्छिदा– 'किं णु ओलोइदो वल्लहजणो' त्ति। ताए उत्तं 'मंदो वो उवआरो जं परिजणे संकंतं वल्लहत्तणं ण जाणीअदि।' ततः सा देव्या पृष्टा–'किंन्ववलोकितो वल्लभजन' इति। तयोक्तम्– 'मन्दो व उपचारः यत् परिजने संक्रान्तं वल्लभत्वं न ज्ञायते।' २.१६

**राजा** *आत्मगतम्* अहो निर्भेदादृतेऽपि मालविकायामयम् उपन्यासः शङ्क्यते। *प्रकाशम्* ततस्ततः? २.१७

**विदूषकः** तदो ताए अणुबन्धिज्जमाणा सा भवदो अविणअं अंदरेण परिगदत्था किदा देवी। ततस्तयानुबध्यमाना सा भवतः अविनयमन्तरेण परिगतार्था कृता देवी। २.१८

**राजा** अहो दीर्घरोषता तत्रभवत्याः। अतः परं कथय। २.१९

**विदूषकः** किं अवरं मालविआ बडलावलिआ अ णिगलपदीओ णाअकण्णकाओ विअ अदिट्ठसुज्जपादं पादालवासं अणुहोन्ति। किमपरं मालविका बकुलावलिका च निगडपद्यौ नागकन्यके इव अदृष्टसूर्यपादं पातालवासमनुभवतः। २.२०

**राजा** कष्टं कष्टम् २.२१

मधुररवा परभृतिका भ्रमरी च विबुद्धचूतसङ्गिन्यौ ।
कोटरमकालवृष्ट्या प्रबलपुरोवातया गमिते ॥२॥

वयस्य! अप्यत्र कस्यचिदुपक्रमस्य गतिः स्यात्? ३.१

**विदूषकः** कहं भविस्सदि। जं सारभण्डघरव्वावारिदा माहविआ देविए संदिट्ठा मह अंगुलीअअमुद्दिअं अदेक्खिअ ण मोत्तव्वा तुए हदासा मालविआ बउलावलिआ अ त्ति। कथं भविष्यति, यत् सारभाण्डगृहव्यापारिता माधविका देव्या संदिष्टा। ममाङ्गुलीयकमुद्रिकामदृष्ट्वा न मोक्तव्या त्वया हताशा मालविका बकुलावलिका चेति। ३.२

**राजा** *निःश्वस्य सपरामर्शम्* सखे! किमत्र कर्तव्यम्? ३.३

---

२. इति सनातनकविमहामहोपध्यायरेवाप्रसादद्विवेदिकृते मालविकाग्निमित्र-प्रतिसंस्कृतप्रतिलिपिकर्म्मणि तृतीयाङ्कप्रतिलेख एष मार्गशीर्षकृष्ण-प्रतिपदि २०५९तमे गते वैक्रमेऽब्दे काश्यामपूरि । २०.११.२००२।

**विदूषकः** *विचिन्त्य* अत्थि एत्थ उवाओ। अस्त्यत्रोपायः। ३.४

**राजा** क इव? ३.५

**विदूषकः** *सदृष्टिक्षेपम्* कोवि अदिट्ठो सुणिस्सदि। कण्णे दे कधेमि। *उपश्लिष्य कर्णे* एव्वं विअ। कोऽप्यदृष्टः श्रोष्यति। कर्णे ते कथयामि। (उपश्लिष्य कर्णे) एवमिव। ३.६

**राजा** *सहर्षम्* सुष्ठु प्रयुज्यतां सिद्धये। ३.७

*प्रविश्य* ३.८

**प्रतीहारी** देव! पवादसअणे देवी णिसण्णा रत्तचंदणधारिणा परिअणहत्थगदेण चरणेण भअवदी कधाहिं विणोदिज्जमाणा चिट्ठदि। देव! प्रवातशयने देवी निषण्णा रक्तचन्दनधारिणा परिजनहस्तगतेन चरणेन भगवत्या कथाभिर्विनोद्यमाना तिष्ठति। ३.९

**राजा** तस्मादस्मत्प्रवेशयोग्योऽयमवसरः। ३.१०

**विदूषकः** भो गच्छदु भवं। अहं वि देविं पेक्खिदुं अरित्तपाणी हुविस्सं। भो गच्छतु भवान्। अहमपि देवीं द्रष्टुमरिक्तपाणि–र्भविष्यामि। ३.११

**राजा** वयस्य! गच्छ जयसेनायास्तावदस्मद्रहस्यं विदितं कुरु। ३.१२

**विदूषकः** तह। होदि! *प्रतीहारीमुपेत्य कर्णे* एव्वं विअ। *आवेद्य निष्क्रान्तः* तथा। भवति! (प्रतीहारीमुपेत्य कर्णे) एवमिव। (आवेद्य निष्क्रान्तः) ३.१३

**राजा** जयसेने! प्रवातशयनमार्गमादेशय। ३.१४

**प्रतीहारी** इदो इदो देवो। इत इतो देवः। *निष्क्रान्तौ* ३.१५

॥२॥

*प्रविशति शयनस्था देवी परिव्राजिका विभवतश्च परिवारः* ३.१६

**देवी** भअवदि! रमणिज्जं कधावत्थु। तदो तदो? भगवति! रमणीयं कथावस्तु। ततस्ततः? ३.१७

**परिव्राजिका** *सदृष्टिक्षेपं* अतः परं पुनः कथयिष्यामि। अत्रभवान् विदिशेश्वरः सम्प्राप्तः। ३.१८

**देवी** अम्हो अज्जउत्तो। अहो आर्यपुत्रः।*अभ्युत्थातुमिच्छति।* ३.१९

**राजा** अलमलमुपचारयन्त्रणया— ३.२०

**अनुचितनूपुरविरहं नार्हति तपनीयपीठिकालम्बि।**
**चरणं रुजापरीतं कलभाषिणि! मां च पीडयितुम्॥ ३॥**

**देवी** जेदु जेदु अज्जउत्तो। जयत्वार्यपुत्रः। ४.१

**परिव्राजिका** विजयतां देवः। ४.२

**राजा** *परिव्राजिकां प्रणम्योपविश्य च* देवि! अपि सह्या वेदना? ४.३

**देवी** अत्थि मे विसेसो। अस्ति मे विशेषः। ४.४

॥ ३ ॥

*ततः प्रविशति यज्ञोपवीतबद्धाङ्गुष्ठः संभ्रान्तो विदूषकः* ४.५

**विदूषकः** परित्ताअदु परित्ताअदु भवं। सप्पेण म्हि दट्ठो। परित्रायतां परित्रायतां भवान्। सर्पेणास्मि दष्टः। ४.६

**सर्वे** *विषण्णाः।* ४.७

**राजा** कष्टं कष्टम्। क्व भवान् परिभ्रान्तः? ४.८

**विदूषकः** देविं देक्खिस्सं त्ति आआरपुफग्गहणकारणादो पमदवणं गदो म्हि। देवीं द्रक्ष्यामीत्याचारपुष्पग्रहणकारणात् प्रमदवनं गतोऽस्मि। परित्रायताम् परित्रायताम्। ४.९

**देवी** हद्धी हद्धी। अहं येव्व बम्हणस्स जीविदसंसअणिमित्तं जादा। हा धिक्! हा धिक्! अहमेव ब्राह्मणस्य जीवितसंशयनिमित्तं जाता। ४.१०

**विदूषकः** तहिं असोअप्पसवग्गहणकालणादो पसारिदो दक्खिण–हत्थो। तदो कोडरविणिग्गदेण सप्परूविणा कालेण दंसिदो म्हि। णं एदाणि दुवे दंतपदानि। *दर्शयति* तस्मिन्नशोकप्रसवग्रहणकारणात् प्रसारिते दक्षिणहस्ते कोटर–निर्गतेन सर्परूपेण कालेन दष्टोऽस्मि। नन्वेते द्वे दन्तपदे। ४.११

**राजा** ननु दंशे छेदः पूर्व्वकर्म्मेति श्रूयते। स तावदस्य क्रियताम्। ४.१२

**परिव्राजिका** ४.१३

**छेदो दंशस्य दाहो वा क्षतेर्वा रक्तमोक्षणम् ।**
**एतानि दष्टमात्राणामायुष्याः प्रतिपत्तयः ॥४॥**

सम्प्रति विषवैद्यानां कर्म्म। ५.१

**राजा** एवं तर्हि, जयसेने! ध्रुवसिद्धिः क्षिप्रमानीयताम्। ५.२

**प्रतीहारी** जं देवी आणवेदि। *निष्क्रान्ता* । यद् देव आज्ञापयति। (निष्क्रान्ता) ५.३

**विदूषकः** अहो! पावेन मिच्चुणा गहीदो म्हि। अहो! पापेन मृत्युना गृहीतोऽस्मि। ५.४

**राजा** मा कातरो भूः।अविषोऽपि कदाचिद् दंशो भवति। ५.५

**विदूषकः** कधं ण भाइस्सं। सिमसिमाअन्ति मे अंगाइं। *विषवेगं रूपयति* कथं न भेष्यामि, सिमसिमायन्ति मेऽङ्गानि। ५.६

**देवी** हा! दंसिदं असुहं विआरेण। अवलम्बह णं। हा! दर्शितमशुभं विकारेण। अवलम्बध्वम् एनम् ५.७

**परिजनः** *ससंभ्रममवलम्बते* ५.८

**विदूषकः** *राजानं विलोक्य* भो! बालत्तणादो वि पिअवअस्सो म्हि दे। तं विआरिअ अपुत्ताए मे जणणीए जोगक्खेमं वहेहि। भोः! बाल्यादपि प्रियवयस्योऽस्मि ते। तं विचार्य अपुत्राया मे जनन्या योगक्षेमं वह। ५.९

**राजा** मा भैषीर्गौतम! स्थिरो भव। अचिरात् त्वां वैद्यश्चिकित्सते। ५.१०

**प्रतीहारी** *प्रविश्य* देव! ध्रुवसिद्धी विण्णावेदि इह एव्व आणीअदु सो गोदमो त्ति। देव! ध्रुवसिद्धिर्विज्ञापयति इहैवानीयतां स गौतम इति। ५.११

**राजा** तेन हि वर्षवरप्रतिगृहीतमेनं तत्रभवतः सकाशं प्रापय। ५.१२

**प्रतीहारी** तध। तथा। ५.१३

**विदूषकः** *देवीं विलोक्य* भोदि! जीवेअं वा ण वा। जं मए अत्तभवंतं सेवमाणेण दे अवरद्धं तं मरिसेहि। भवति! जीवेयं वा न वा। यन्मयात्रभवन्तं सेवमानेन तेऽपराद्धं तन्मृष्यस्व। ५.१४

**देवी** दीघाऊ होहि। दीर्घायुर्भव। ५.१५

*निष्क्रान्तो विदूषकः प्रतीहारी च* ५.१६

राजा प्रकृतिभीरुस्तपस्वी ध्रुवसिद्धेरपि यथार्थनाम्नः सिद्धिं न मन्यते। ५.१७

*प्रविश्य* ५.१८

प्रतीहारी जेदु भट्टा। धुवसिद्धी विण्णावेदि उदकुंभविहाणेण सप्पमुद्दिअं किं पि कप्पिदव्वं। तं अण्णेसीअदु त्ति। जयतु भर्ता। ध्रुवसिद्धिर्विज्ञापयति— उदकुम्भविधानेन[1] सर्पमुद्रितं किमपि कल्पयितव्यम्। तदन्विष्यतामिति। ५.१९

देवी इदं सप्पमुद्दिअं अंगुलीअअं। पच्छा मह हत्थे देहि णं। *अङ्गुलीयकं ददाति*। इदं सर्पमुद्रितमङ्गुलीयकम्। पश्चान्मम हस्ते देह्येतत् ५.२०

प्रतीहारी *नाट्येन गृहीत्वा प्रस्थिता*। ५.२१

राजा जयसेने! कर्म्मसिद्धावाशु प्रतिपत्तिमानय। ५.२२

प्रतीहारी जं देवो आणवेदि। *निष्क्रान्ता*। यद् देव आज्ञापयति। (निष्क्रान्ता) ५.२३

परिव्राजिका यथा मे हृदयमाचष्टे तथा निर्विषो गौतमः। ५.२४

राजा भूयादेवम्। ५.२५

*प्रविश्य* ५.२६

प्रतीहारी जेदु भट्टा। णिवुत्तविसवेगो गोतमो मुहुत्तेण पकिदित्थो संवुत्तो। जयतु भर्ता। निवृत्तविषवेगो गौतमो मुहूर्तेन प्रकृतिस्थः संवृत्तः। ५.२७

देवी दिट्ठिआ वअणीआदो मुत्तम्हि। दिष्ट्या वचनीयान्मुक्तास्मि ५.२८

प्रतीहारी एषो उण अमच्चो वारिहदओ विण्णवेदि राअकज्जं बहु मंतेदव्वं, दंसणेण अणुग्गहं इच्छम्मि त्ति। एष पुनरमात्यो बार्हतको विज्ञापयति राजकार्यं बहु मन्त्रयितव्यम्, दर्शनेन अनुग्रहमिच्छामीति। ५.२९

देवी गच्छदु अज्जउत्तो कज्जसिद्धीए। गच्छत्वार्यपुत्रः कार्यसिद्धये। ५.३०

राजा आतपाक्रान्तोऽयमुद्देशः। शीतक्रिया चास्या रुजः प्रशस्ता। तदन्यत्र नीयतां शयनीयम्। ५.३१

देवी बालिआओ! अज्जउत्तवअणं अणुचिट्ठह। बालिकाः! आर्यपुत्रवचन— मनुतिष्ठत। ५.३२

परिजन: तध। तथा *निष्क्रान्तास्तथाकर्तुं प्रक्रान्ताः परिजनः देवी परिव्राजिका च*। ५.३३

राजा जयसेने! मां गूढेन पथा प्रमदवनं प्रापय। ५.३४

प्रतीहारी इदो इदो देवो। इत इतो देवः। ५.३५

राजा जयसेने! ननु समाप्तकार्य्यो गौतमः। ५.३६

प्रतीहारी अह इं। अथ किम् ५.३७

राजा ५.३८

इष्टाधिगमनिमित्तं प्रयोगमेकान्तसाध्यमपि मत्वा ।
संदिग्धमेव सिद्धौ कातरमाशङ्कते हृदयम् ॥५॥

*प्रविश्य* ६.१

विदूषक: वड्ढदु भवं। सिद्धाणि दे मंगलकम्माणि। वर्धतां भवान्। सिद्धानि ते मङ्गलकर्माणि। ६.२

राजा जयसेने! त्वमपि स्वं नियोगमशून्यं कुरु। ६.३

प्रतीहारी जं देवो आणवेदि। यद् देव आज्ञापयति।

*निष्क्रान्ता* ६.४

राजा गौतम! क्षुद्रा माधविका। न खलु किञ्चिद् विचारितमनया? ६.५

विदूषक: देविए अंगुलीअअमुद्दिअं देक्खिअ कधं विआरेदि? देव्या अङ्गुलीयकमुद्रां दृष्ट्वा कथं विचारयति। ६.६

राजा न खलु मुद्रामधिकृत्य ब्रवीमि। एतयोर्द्वयोः किन्निमित्तो मोक्षः, किं वा देव्याः परिजनमतिक्रम्य भवान् संदिष्टः इत्येवमनया प्रष्टव्यम्। ६.७

विदूषक: णं पुच्छिदोम्हि! पुणो मंदस्स मे तस्सिं पच्चुप्पण्णा मदी। ननु पृष्टोऽस्मि। पुनर्मन्दस्य मे तस्मिन् प्रत्युत्पन्ना मतिः। ६.८

राजा कथ्यताम्। ६.९

विदूषक: भणिदं मए। देवचिंतएहिं विण्णाविदो राआ 'सोवसग्गं वो णक्खत्तं ता अवस्सं सव्वबंधमोक्खो करीअदु' त्ति। भणितं मया। दैवचिन्तकैर्विज्ञापितो राजा—'सोपसर्गं वो नक्षत्रम्। तदवश्यं सर्वबन्धमोक्षः क्रियतामि'—ति। ६.१०

राजा *सहर्षं* ततस्ततः। ६.११

विदूषक: तं सुणिअ देवीए इरावदीए चित्तं रक्खन्तीए राआ किल मुञ्चेदि त्ति अहं संदिट्ठो त्ति। तदो जुज्जदि त्ति ताएएव्वं संपादिदो अत्थो। तच्छ्रुत्वा देव्या इरावत्याश्चित्तं रक्षन्त्या राजा किल मोचयतीत्यहं संदिष्ट इति। ततो युज्यत इति तयैवं सम्पादितोऽर्थः। ६.१२

राजा *विदूषकं परिष्वज्य* सखे! प्रियोऽहं खलु तव। ६.१३

नहि बुद्धिगुणेनैव सुहृदामर्थदर्शनम् ।
कार्य्यसिद्धिपथः सूक्ष्मः स्नेहेनाप्युपलभ्यते ॥६॥

विदूषक: तुवरदु भवं। समुद्दघरम्मि सहीसहिदं मालविअं ठाविअ अत्तभवंदं पच्चुग्गदो म्हि। त्वरतां भवान्। समुद्रगृहे सखीसहितां मालविकां स्थापयित्वा अत्रभवन्तं प्रत्युद्गतोऽस्मि। ७.१

राजा अहमेनां संभावयामि। गच्छाग्रतः। ७.२

विदूषक: एदु भवं। *परिक्रम्य* एदं समुद्दघरं। एतु भवान्। (परिक्रम्य) इदं समुद्रगृहम्। ७.३

राजा *साशङ्कम्* वयस्य! एषा कुसुमावचयव्यग्रहस्ता सख्यास्ते इरावत्याः परिचारिका चन्द्रिका सन्निकृष्टमागच्छति। इतस्तावदावां भित्तिगूढौ भवावः। ७.४

विदूषक: अहो कुंभीलएहिं कामुएहिं अ परिहरणिज्जा चंदिआ। अहो कुम्भीलकैः कामुकैश्च परिहरणीया खलु चन्द्रिका। ७.५

उभौ *यथोक्तं कुरुतः* ७.६

राजा गौतम! कथं नु ते सखी मां प्रतिपालयति । एहि। एनां

---

१. उदकुम्भविधानं कुम्भविधृतस्य जलस्य सर्पाङ्कितया प्रोक्षण्या सर्पमन्त्रजपपूर्वकं १०८वारान् प्रोक्षणम्।

गवाक्षमाश्रित्य विलोकयाव: । ७.७

**विदूषक** तह । तथा । ७.८

**उभौ** *विलोकयन्तौ तिष्ठत:* ७.९

॥ ४ ॥

*तत: प्रविशाति मालविका बकुलावलिका च* ७.१०

**बकुलावलिका** सहि! पणम भट्टारं। सखि! प्रणम भर्तारम्। ७.११

**मालविका** णमो दे। नमस्ते। ७.१२

**राजा** शङ्के प्रतिकृति मे निर्दिशति। ७.१३

**मालविका** *सहर्षं द्वारमवलोक्य सविषादम्* हला मं विप्पलंभेसि। सखि! मां विप्रलम्भयसि। ७.१४

**राजा** हर्षविषादाभ्यामत्रभवत्या: प्रीतोऽस्मि। ७.१५

**सूर्योदये भवति या सूर्यास्तमये च पुण्डरीकस्य ।**
**वदनेन सुवदनायास्ते समवस्थे क्षणादूढे ॥७॥**

**बकुलावलिका** णं एषो चित्तगदो भट्टा। नन्वेष चित्रगतो भर्ता। ८.१

**उभे** *प्रणिपत्य* जेदु भट्टा। जयतु भर्त्ता। ८.२

**मालविका** *चित्रं निर्वर्ण्य* हला! तदा संमुहत्थिदे भत्तुणो रूवे ण तह वितिण्हम्हि जह अज्ज। विभाविदो मए चित्तगदो अवितिण्हदंसणो भट्टा। सखि! तदा संमुखस्थिते भर्तू रूपे न तथा वितृष्णाऽस्मि यथा अद्य। विभावितो मया चित्रगत: अवितृष्णदर्शनो भर्त्ता। ८.३

**विदूषक:** सुदं भवदा? तत्तहोदी चित्ते जधा दिट्ठो ण तधा दिट्ठो भवं त्ति मंतेदि। मुहा दाणिं मंजूसा विअ रदणभण्डं जोव्वणगव्वं वहेसि। श्रुतं भवता? तत्रभवती 'चित्रे यथा दृष्टो न तथा दृष्टो भवानि'—ति मन्त्रयति। मुधेदानीं मञ्जूषेव रत्नभाण्डं यौवनगर्वं वहसि। ८.४

**राजा** सखे! कुतूहलवानपि निसर्गशालीन: स्त्रीजन:। पश्य—८.५

**कार्त्स्न्येन निर्वर्णयितुं च रूप—**
**मिच्छन्ति तत्पूर्वसमागमानाम् ।**
**न च प्रियेष्वायतलोचनानां**
**समग्रपातीनि[२] विलोचनानि ॥८॥**

**मालविका** हला! का एसा पासपरिउत्तमुहेण भट्टिणा सिणिद्धाए दिट्ठिए णिज्झाईअदि? सखि! का एषा पार्श्वपरिवृत्तमुखेन भर्त्रा स्निग्धया दृष्ट्या निध्यायते? ९.१

**बकुलावलिका** णं इअं भट्टिणो पासगदा इरावदी। नन्वियं भर्तु: पार्श्वगता इरावती। ९.२

**मालविका** सहि! अदक्खिणो विअ भट्टा मे पडिभादि जो सव्वं देवीजणं उज्झिअ एक्काए मुहे बद्धलक्खो।. सखि! अदक्षिण इव भर्ता मे प्रतिभाति य: सर्वं देवीजनमुज्झित्वा एकस्या मुखे बद्धलक्ष्य:। ९.३

**बकुलावलिका** *आत्मगतम्* चित्तगदं भट्टारअं परमत्थदो संकप्पिअं असूअदि। होदु। कीडिस्सं दाव एदाए। *प्रकाशम्* हला! भट्टिणो वल्लहा एसा। (आत्मगत) चित्रगतं भर्तारं परमार्थत: संकल्प्यासूयति। भवतु। क्रीडिष्यामि तावदेतया। (प्रकाशम्) सखि! भतुर्वल्लभैषा। ९.४

**मालविका** तदो किं दाणिं अत्ताणं आआसइस्सं। *सासूयं परावर्त्तते* तत: किमिदानीम् आत्मानम् आयासयिष्यामि। ९.५

**राजा** सखे! पश्य – ९.६

**भ्रूभङ्गभिन्नतिलकं स्फुरिताऽधरोष्ठं**
**सासूयमाननमित: परिवर्त्तयन्त्या ।**
**कान्तापराधकुपितेष्वनया विनेतु:**
**संदर्शितेव ललिताऽभिनयस्य शिक्षा ॥ ९॥**

**विदूषक:** अणुणअसज्जो दाणिं होहि। अनुनयसज्ज: इदानीं भव। १०.१

**मालविका** अज्जगोदमो वि एत्थ एव्व सेवदि णं। *भूय: स्थानान्तराभिमुखी भवितुमिच्छति।* आर्यगौतमोऽप्यत्रैव सेवत एनम्। १०.२

**बकुलावलिका** *मालविकां रुद्ध्वा* ण क्खु कुविदा दाणिं तुमं? न खलु कुपितेदानीं त्वम्? १०.३

**मालविका** जइ चिरं कुविदं ज्जेव्वं मं मण्णेसि एसो पच्चाणीअदि कोवो।यदि चिरं कुपितामेव मां मन्यसे एष प्रत्यानीयते कोप:। १०.४

**राजा** *उपेत्य* १०.५

**कुप्यसि कुवलयनयने! चित्रार्पितचेष्टया किमेवमयि ।**
**ननु तव साक्षादयमहमनन्यसाधारणो दास:[३] ॥१०॥**

**बकुलावलिका** जेदु भट्टा। जयतु भर्ता। ११.१

**मालविका** *आत्मगतम्* कहं चित्तगदो भट्टा मए असूइदो? *प्रकाशम्, सव्रीडवदनमञ्जलिं करोति।* कथं चित्रगतो भर्ता मया असूयित:। ११.२

**राजा** *मदनकातर्यं रूपयति।* ११.३

**विदूषक:** किं भवं उदासीणो विअ दीसइ? किं भवानुदासीन इव दृश्यते? ११.४

**राजा** अविश्वसनीयत्वात् सख्यास्तव। ११.५

**विदूषक:** मा दाव अत्तभोदीए कधं तुह अविस्सासो? मा तावत् अत्रभवत्यां कथं तव अविश्वास:? ११.६

**राजा** श्रूयताम्। ११.७

**पथि नयनयो: स्थित्वा स्वप्ने तिरोभवति क्षणात्**
**सरति सहसा बाह्वोर्मध्यं गतापि सखी तव ।**
**मनसिजरुजा क्लिष्टस्यैवं समागममायया**
**कथमिव सखे! विस्रब्धं स्यादिमां प्रति मे मन: ॥११॥**

**बकुलावलिका** सहि! बहुसो क्खु भट्टा विप्पलद्धो। ता तुए अत्ता विस्ससणिज्जो करीअदु। सखि! बहुश: किल भर्ता विप्रलब्ध:। तत् त्वया आत्मा विश्वसनीय: क्रियताम्। १२.१

**मालविका** सहि! मह उण मंदभग्गाए सिविणसमागमो वि भट्टिणो दुल्लहो आसि। सखि! मम पुनर्मन्दभाग्याया: स्वप्नसमागमोऽपि भर्तुर्दुर्लभ आसीत्। १२.२

---

२. समग्रवृत्तीनि इति पाठभेद:। ज.नि.ता.।

३. प्रणयकुपिता प्रेयसी हि काली तस्यै दास: कालिदास इति कवेरस्य स्वनाममुद्रेयमिति कलयामहे। 'ननु तव काल्या अयमहमनन्यसा–धारणो दास:' इति त्वत्र वक्तुमुचितायेत।

**बकुलावलिका** (राजानं प्रति) भट्टा कधेदु से उत्तरं। भर्ता कथयत्वस्या उत्तरम्। १२.३

**राजा** १२.४

**उत्तरेण किमात्मैव पञ्चबाणाग्निसाक्षिकम् ।**
**तव सख्यै मया दत्तो न सेव्यः सेविता रहः ।।१२।।**

**बकुलावलिका** अणुग्गहीदम्हि। अनुगृहीतास्मि। १३.१

**विदूषकः** *परिक्रम्य ससंभ्रमम्* वउलावलिए! एसो बालासोअरुक्खस्स पल्लवाइं लंघेदि हिरणो। एहि णिवारएम णं। बकुलावलिके! एष बालाशोकवृक्षस्य पल्लवानि लङ्घयति हरिणः। एहि, निवारयाम एनम्। १३.२

**बकुलावलिका** तध। तथा। *प्रस्थिता* १३.३

**राजा** वयस्य! एवमेवास्मिन् रक्षणीयेऽवहितेन त्वया भवितव्यम्। १३.४

**विदूषकः** एव्वं वि गोदमो संदिसेअदि? एवमपि गौतमः सन्दिश्यते? १३.५

**बकुलावलिका** *परिक्रम्य* अज्ज गोदम! अहं अप्पआसे चिट्ठामि। तुमं दुवाररक्खओ होहि। आर्य गौतम! अहमप्रकाशे[4] तिष्ठामि। त्वं द्वाररक्षको भव। १३.६

**विदूषकः** जुज्जदि। युज्यते। १३.७

**बकुलावलिका** *निष्क्रान्ता* १३.८

**विदूषकः** *निद्रायते* इदं दाव फलिहत्थलं अस्सिदो होमि। *तथा करोति*। अहो सुहप्फरिसदा सिलाविसेसस्स। इदं तावत् स्फटिकस्थलमाश्रितो भवामि। तथा करोति अहो सुखस्पर्शता शिलाविशेषस्य। १३.९

**मालविका** *ससाध्वसा तिष्ठति*। १३.१०

**राजा** १३.११

**विसृज सुन्दरि संगमसाध्वसं**
**ननु चिरात् प्रभृति प्रणयोन्मुखे ।**
**परिगृहाण गते सहकारतां**
**त्वमतिमुक्तलताचरितं मयि ।।१३।।**

**मालविका** देवीए भएण अत्तणो वि पिअं कादुं ण पारेमि। देव्या भयेनात्मनोऽपि प्रियं कर्तुं न पारयामि। १४.१

**राजा** अयि न भेतव्यम्। १४.२

**मालविका** *सोपालम्भम्* जो ण भाएदि सो मए भट्टिणीदंसणे दिट्ठसामत्थो भट्टा। यो न बिभेति स मया भट्टिनीदर्शने दृष्टसामर्थ्यो भर्ता। १४.३

**राजा** १४.४

**दाक्षिण्यं नाम बिम्बोष्ठि! बैम्बिकानां कुलव्रतम् ।**
**तन्मेदीर्घाक्षि! ये प्राणास्ते त्वदाशानिबन्धनाः।।१४।।**

*संश्लेषमुपजनयति*।।[5] १५.१

**मालविका** *नाट्येन परिहरति*। १५.२

**राजा** *आत्मगतम्* रमणीयः खलु नवाङ्गनानां मदनविषयावतारः। एषा हि – १५.३

---

४. अप्पआसे अप्रकाशे निभृत इति यावत्।

५. अयं द्वितीयः स्पर्शः प्रियायाः।

**हस्तं कम्पवती रुणद्धि रशनाव्यापारलोलाङ्गुलिं**
**स्वौ हस्तौ नयति स्तनावरणतामालिङ्ग्यमाना बलात् ।**
**पातुं पक्ष्मलनेत्रमुन्नमयतः साचीकरोत्याननं**
**व्याजेनाप्यभिलाषपूरणसुखं निर्वर्त्तयत्येव मे ।।१५।।**

**।।५ ।।**

*ततः प्रविशति इरावती निपुणिका च* १६.१

**इरावती** हंजे णिउणिए! सच्चं तुमं परिगदत्था चंदिआए समुद्दघर अलिंदसइदो एआई अज्जगोदमो दिट्ठो त्ति। हञ्जे निपुणिके! सत्यं त्वं परिगतार्था चन्द्रिकया समुद्रगृहालिन्दशयित एकाकी आर्यगौतमो दृष्ट इति। १६.२

**निपुणिका** अण्णधा कहं भट्टिणीए विण्णावेमि। अन्यथा कथं भट्टिन्यै विज्ञापयामि। १६.३

**इरावती** तेण हि तहिं येव्व गच्छम्ह संसआदो मुत्तं अज्जउत्तस्स पिअवअस्सं पुच्छिदुं अ। तेन हि तत्रैव गच्छामः संशयान्मुक्तमार्यपुत्रस्य प्रियवयस्यं प्रष्टुं च..। १६.४

**निपुणिका** सावसेसं विअ भट्टिणीए वअणं। सावशेषमिव भट्टिन्या वचनम्। १६.५

**इरावती** [6]चित्तगदं अज्जउत्तं पसादेदुं अ। चित्रगतमार्यपुत्रं प्रसादयितुं च। १६.६

**निपुणिका** अध दाणिं कधं णु भट्टा येव्वं अणुणीअदि? अथेदानीं कथं नु भर्ता एवमनुनीयते। १६.७

**इरावती** मुद्धे! जारिसो चित्तगदो णं तारिसो येव्व अण्णसंकंतहिअओ अज्जउत्तो। केवलं उवआरादिक्कमं परिमज्जिदुं अअं आरंभो। मुग्धे! यादृशश्चित्रगतो ननु तादृश एवान्यसंक्रान्तहृदय आर्यपुत्रः। केवलमुपचारातिक्रमं प्रमार्जितुमयमारम्भः। १६.८

**निपुणिका** इदो इदो भट्टिणी। इत इतो भट्टिनी। १६.९

**उभे** *परिक्रामतः*। १६.१०

*प्रविश्य* १६.११

**चेटी** जेदु भट्टिणी। भट्टिणि देवी भणदि ण मे मच्छरस्स एसो कालो[7]। तहु क्खु बहुमाणं बड्ढेदुं वअस्साए सह निअडबंधणे किदा मालविआ। जइ अणुमण्णेसि अज्जउत्तस्स पिअ कादुं तधा करेमि । जं तुह इच्छिदं तं मे भणाहि त्ति[8] जयतु भट्टिनी। भट्टिनी! देवी भणति– न मे मत्सरस्यैष कालः। तव खलु बहुमानं वर्धयितुं वयस्यया सह निगडबन्धने कृता मालविका। यदि अनुमन्यसे आर्यपुत्रस्य प्रियं कर्तुं तथा करोमि। यत्तवेष्टं तन्मे भणेति। १६.१२

**इरावती** णाअरिए! विण्णावेहि देविं का वअं भट्टिणीं णिओजेदुं। परिजणनिग्गहेण दंसिदो मइ अणुग्गहो। कस्स वा पसादेण अअं जणो वड्ढदि त्ति। नागरिके! विज्ञापय

---

६. चित्तं चेतः चित्रं च।

७. एसो मस्सइस्स कालो इति हामा.

८. उत्तं पि तुइ किदे विणणावइस्स। इरावती णाअरिए इति हामा।

देवीम्– 'का वयं भट्टिनीं नियोजयितुं परिजननिग्रहेण दर्शितो मय्यनुग्रहः। कस्य वा प्रसादेनायं जनो वर्धत इति। १६.१३

**चेटी** तध । तथा । *निष्क्रान्ता* १६.१४

**निपुणिका** *परिक्रम्यावलोक्य च* भट्टिणि! एस दुआरुद्देसे समुद्दगिहकस्स विपणिगदो विअ बलीवद्दो गोदमो आसीणो एव्व णिद्दाअदि। भट्टिनी! एष द्वारोद्देशे समुद्रगृहस्य विपणिगत इव बलीवर्दः आर्यगौतमः आसीन एव निद्रायते। १६.१५

**इरावती** किं णु क्खु अच्चाहिअं? सावसेसो विसविआरो हवे। किं नु खलु अत्याहितम्? सावशेषो विषविकारो भवेत्। १६.१६

**निपुणिका** पसण्णमुहवण्णो दीसइ। अवि अ धुअसिद्धिणा चिइच्छिदो। ता से असंकणिज्जं पावं। प्रसन्नमुखवर्णो दृश्यते। अपि च ध्रुवसिद्धिना चिकित्सितः। तदस्याशङ्कनीयं पापम्। १६.१७

**विदूषकः** *उत्स्वप्नायते* भोदि मालविए! भवति मालविके! १६.१८

**निपुणिका** सुदं भट्टिणिए कस्स वा एसो अत्तणिओअसंवादणे विस्ससणिज्जो हदासो। सव्वकालं यिदो येव्व सोत्थिवाअणमोअएहि कुक्खिं पूरिअ संवदं मालविआं सिविणावेदि? श्रुतं भट्टिन्या? कस्यैष आत्मनियोगसम्पादने विश्वसनीयो हताशः। सर्वकालमित एव स्वस्तिवाचनमोदकैः कुक्षिं पूरयित्वा साम्प्रतं मालविकां स्वप्नायते। १६.१९

**विदूषकः** इरावदिं अतिक्कमंदी होहि। इरावतीमतिक्रामन्ती भव।१६.२०

**निपुणिका** एदं अच्चाहिदं। इमं भुअंगभीरुअं बम्हबंधुं इमिणा भुअंगकुटिलेण अत्तणो दंडकट्ठेण खंभंदरिदा भाअइस्सं। एतदत्याहितम्। इमं भुजङ्गभीरुं ब्रह्मबन्धुमनेन भुजङ्गकुटिलेन आत्मनो दण्डकाष्ठेन स्तम्भान्तरिता भीषयिष्यामि। १६.२१

**इरावती** अरुहदि किदग्घो उपद्दवस्स। अर्हत्येव कृतघ्न उपद्रवस्य १६.२२

**निपुणिका** *विदूषकस्योपरि दण्डकाष्ठं पातयति।* १६.२३

**विदूषकः** *सहसा प्रबुद्धय* अविहा अविहा। भो वअस्स। सप्पो मे उवरि पडिदो। अविधा अविधा। भो वयस्य! सर्पो मे उपरि पतितः। १६.२४

**राजा** *सहसोपसृत्य* सखे न भेतव्यम् न भेतव्यम्। १६.२५

**मालविका** *अनुसृत्य* भट्टा! मा दाव सहसा णिक्कम। सप्पो त्ति भणीअदि। भर्तः! मा तावत् सहसा निष्क्राम। सर्प इति भण्यते। १६.२६

**इरावती** हद्धी हद्धी। भट्टा इदो येव्व धावदि। हा धिक् हा धिक्! भर्ता इत एव धावति। हा धिक् हा धिक्! १६.२७

**विदूषकः** *सप्रहासं* कधं दंडकट्ठं एदं। अहं उण जाणे जं मए केदईकंटएहि दंसं करिअ सप्पस्स उवरि अअसो किदं तं मे फलिदं त्ति। कथं दण्डकाष्ठमेतत्। अहं पुनर्जाने यन्मया केतकीकण्टकैर्दंशं कृत्वा सर्पस्योपरि अयशः कृतं तन्मे फलितमिति। १६.२८

*प्रविश्य पटाक्षेपेण* १६.२९

**बकुलावलिका** *ससंभ्रमं* मा दाव भट्टा पविसदु। इह कुटिलगई सप्प विअ दीसदि। मा तावद् भर्ता प्रविशतु। इह कुटिलगतिः सर्प इव दृश्यते। १६.३०

**इरावती** *राजानं सहसोपेत्य* अवि णिब्बिग्घमणोरधो दिवासंकेदो मिधुणस्स? अपि निर्विघ्नमनोरथो दिवासङ्केतो मिथुनस्य?१६.३१

*सर्वे इरावतीं दृष्ट्वा संभ्रान्ताः।* १६.३२

**राजा** प्रिये! अपूर्वोऽयमुपचारः। १६.३३

**इरावती** वउलावलिए! दिट्ठिआ दुच्चाहिसारविसआ संपुण्णा दे पइण्णा? [१] बकुलावलिके! दिष्ट्या दूत्याभिसारविषया संपूर्णा ते प्रतिज्ञा। १६.३४

**बकुलावलिका** पसीददु भट्टिणी! दद्दुरा वाहरंदि त्ति किं देवो पुहवीं वरिसिदुं सुमरदि? प्रसीदतु भट्टिनि! दर्दुरा व्याहरन्तीति किं देवः पृथिव्यां वर्षितुं स्मरति? १६.३५

**विदूषकः** मा दाव। भवदिए दंसणमत्तेण अत्तभवं पणिवादलंघणं विसुमरिदो। भोदी उण अज्जवि पसादं ण गेण्हदि। मा तावत्। भवत्याः दर्शनमात्रेणात्रभवान् प्रणिपातलङ्घनं विस्मृतः। भवती पुनरद्यापि प्रसादं न गृह्णाति। १६.३६

**इरावती** कुविदा दाणिं अहं किं करिस्सं? कुपितेदानीमहं किं करिष्यामि? १६.३७

**राजा** एवमेतत्।अस्थाने कोप इत्यनुपपन्नं त्वयि।तथाहि—१६.३८

कदा मुखं वरतनु! कारणादृते
तवागतं क्षणमपि कोपपात्रताम् ।
अपर्व्वणि ग्रहकलुषेन्दुमण्डला
विभावरी कथय कथं भविष्यति[१०] ।।१६।।

**इरावती** अट्ठाणे त्ति सुट्ठु वाहरिदं अज्जउत्तेण। अण्णसंकंतेसु अम्हाणं भाअहेएसु जइ उण कुप्पेअं तदो णं अहं हस्सा भवेअं। अस्थान इति सुष्ठु व्याहृतमार्यपुत्रेण। अन्यसंक्रान्तेषु वस्माकं भागधेयेषु यदि पुनः कुप्येयम् ततो नन्वहं हास्या भवेयम्। १७.१

**राजा** त्वमन्यथा कल्पयसि। अहं पुनः सत्यमेव कोपस्थानं न पश्यामि। कुतः — १७.२

नार्हति कृतापराधोऽप्युत्सवदिवसेषु परिजनो बन्धम् ।
इति मोचिते मयैते प्रणिपतितुं मामुपगते च।।१७।।

**इरावती** णिउणिए गच्छ देविं वण्णावेहि दिट्ठो भवदीए पक्खवादो णं अज्ज त्ति। निपुणिके! गच्छ। देवीं विज्ञापय– 'दृष्टो भवत्याः पक्षपातो नन्वद्येति'। १८.१

**निपुणिका** तध। तथा। *निष्क्रान्ता* १८.२

**विदूषकः** *आत्मगतम्* अहो अणत्थो संपडिदो। बंधणब्भट्ठो गिहकवोदो बिडालिआआलोए पडिदो। अहो अनर्थः संपतितः। बन्धनभ्रष्टो गृहकपोतो बिडालिकालोके पतितः। १८.३

— *प्रविश्य* १८.४

---

९. एकान्तव्यतिकर एष कामुकानामन्योन्यप्रणयफलागमोत्सुकानाम्। कस्मिन् वा कवितरि लभ्यतां विहाय शुङ्गानां कविमिह कालिदासमेकम्।। रे.

१०. द्र. कु. ५.४४ ।

**निपुणिका** *अपवार्य* भट्टिणी! जदिच्छादिट्ठाए माहविआए आचक्खिदं एव्वं क्खु एदं णिव्वुत्तं त्ति। भट्टिनि! यदृच्छादृष्टया माधविकयाख्यातम्— एवं खल्वेतन्निर्वृत्तमिति।

*कर्णे कथयति* १८.५

**इरावती** *आत्मगतम्* उववण्णं सव्वं। अअं एत्थ बम्हबंधुणा किदो पओओ। *विदूषकं विलोक्य प्रकाशम्* इअं इमस्स कामतंतसचिवस्स णीदी। (आत्मगतम्) उपपन्नं सर्वम्। अयमत्र ब्रह्मबन्धुना कृतः प्रयोगः। (विदूषकं विलोक्य प्रकाशम्) इयमस्य कामतन्त्रसचिवस्य नीतिः। १८.६

**विदूषकः** भोदि! जदि णीदिगदं एक्कं वि अक्खरं पढेअं तदो गाअत्तिं वि विसुमरेअं। भवति! यदि नीतिगतमेकमप्यक्षरं पठेयं तदा गायत्रीमपि विस्मरेयम्। १८.७

**राजा** *आत्मगतम्* कथं नु खल्वस्मात् संकटादात्मानं मोचयिष्यामि? १८.८

*प्रविश्य सावेगा* १८.९

**जयसेना** देव! कुमारी वसुलच्छी कंदुअं अणुधावंदी पिंगलवाणरेण बलीअं तासिदा अंकणिसण्णा देवीए पवादकिसलअं विअ वेवमाणा ण दाणिं वि पकिदिं पडिवज्जइ। देव! कुमारी वसुलक्ष्मीः कन्दुकमनुधावन्ती पिङ्गलवानरेण बलीयस्त्रासिता अङ्कनिषण्णा देव्याः प्रवात–किसलयमिव वेपमाना नेदानीमपि प्रकृतिं प्रतिपद्यते। १८.१०

**राजा** कष्टम्। कातरो बालभावः। १८.११

**इरावती** *सावेगम्* तुवरदु अज्जउत्तो णं समासासिदुं। मा से संतासजणिदो विआरो बड्ढदु। त्वरतामार्यपुत्र एनां समाश्वासयितुम्। मास्याः संत्रासजनितो विकारो वर्धताम्। १८.१२

**राजा** अयमेनामहं संज्ञापयामि। *सत्वरं परिक्रामति।* १८.१३

**विदूषकः** साहु रे पिंगलवानर! साहु। परित्तादो तुए संकटादो सपक्खो। साधु रे पिङ्गलवानर! साधु। परित्रातस्त्वया संकटात् स्वपक्षः। १८.१४

*निष्क्रान्तौ राजा विदूषकश्च, इरावती निपुणिका प्रतीहारी च।* १८.१५

**मालविका** हला देविं चिंतिअ वेवइ मे हिअअं। ण जाणे अदो वरं किं अणुहविदव्वं त्ति। सखि! देवीं चिन्तयित्वा वेपते मे हृदयम्। न जाने अतः परं किमनुभवितव्यं भविष्यतीति। १८.१६

*नेपथ्ये* १८.१७

अच्चरिअं अच्चरिअं। अपुण्णे पंचरत्ते दोहलस्स मुउलेहिं संणद्धो तवणीआसोअओ। जाव देवीए णिवेदेमि। आश्चर्यमाश्चर्यम्। अपूर्णे पञ्चरात्रे दोहदस्य मुकुलैः संनद्धस्तपनीयाशोकः। यावद् देव्यै निवेदयामि। १८.१८

**उभे** *श्रुत्वा प्रहृष्टे।* १८.१९

**बकुलावलिका** आस्ससिदु सहि! सच्चपइण्णा देवी। आश्वसितु सखि! सत्यप्रतिज्ञा देवी। १८.२०

**मालविका** तेण हि पमदवणपालिआए पिट्ठदो होम्ह। तेन हि प्रमदवनपालिकायाः पृष्ठतो भवाव। १८.२१

**बकुलावलिका** तध। तथा। १८.२२

*निष्क्रान्ते* १८.२३

**इति महाकविकालिदासकृतौ मालविकाग्निमित्रे नाटके कपोतबिडालो नाम चतुर्थोऽङ्कः॥ ४॥**[११] १८.२४

॥ पञ्चमाङ्कारम्भकप्रवेशकः ॥ १.१

॥ १ ॥

*ततः प्रविशत्युद्यानपालिका* १.२

**उद्यानपालिका** उवक्खित्तो मए किदसक्कारविहिणा तवणीआसोअस्स भित्तिवेदिआबंधो। जाव अणुट्ठिदणिओअं अत्ताणं देवीए णिवेदेमि। *परिक्रम्य* अहो देवस्स अणुकंपणिज्जा मालविआ। तस्सिं तह चंडिआ देवी। इमिणा असोअकुसुमवुत्तंतेण पसादसुमुही हविस्सदि। कहिं णु क्खु भवे देवी? *विलोक्य* अम्मो एसो देवीए परिजणाभ्यन्दरो किंवि जदुमुद्दालंछिदं मंजूसं गेण्हिअ चतुस्सालादो खुज्जो सारसओ णिक्कामदि। पुच्छिस्सं दाव णं। उपक्षिप्तो मया कृतसत्कारविधिस्तपनीयाशोकस्य भित्तिवेदिकाबन्धः। यावदनुष्ठित–नियोगमात्मानं देव्यै निवेदयामि। (परिक्रम्य) अहो दैवस्य अनुकम्पनीया मालविका! तस्यां तथा चण्डी देवी अनेन अशोककुसुमवृत्तान्तेन प्रसादसुमुखी भविष्यति। कुत्र नु खलु देवी भवेत्? (विलोक्य) अहो एष देव्याः परिजनाभ्यन्तरः किमपि जतुमुद्रालाञ्छितां मञ्जूषां गृहीत्वा चतुःशालतः कुब्जः सारसको निष्क्रामति। पृच्छामि तावदेनम्। १.३

॥ २ ॥

*ततः प्रविशति यथानिर्दिष्टहस्तः कुब्जः* १.४

**उद्यानपालिका** सारसक! कहिं पत्थिदोसि? सारसक! कुत्र प्रस्थितोऽसि? १.५

**सारसकः** महुअरिआए! विज्जापारिआगं बम्हणाणं इमाणि दक्खिणानिक्काणि[१] पुरोहिदस्स हत्थं पावइस्सं। मधुकरिके! विद्यापारगाणां ब्राह्मणानां इमानि दक्षिणानिष्काणि

---

११. कविनटगतौ यौ वै कौचित् परस्परसंहतौ
प्रभवत इह व्यापारौ द्वौ चमत्कृतये सताम्।
निपुणनिपुणं दृब्धौ तावत्र वस्तुनि विस्मयाऽऽ–
वहतनुतया वाचा सुश्लिष्टया प्रतिपादिते॥
प्रतिपदमिह पाठे भिद्यमाने न बुद्धिः
प्रभवति परमार्थं वेदितुं हन्त सद्यः।
न तु विरमति साध्वी सा ततः संप्रसादं
कमपि कुरुत एव प्रातिभस्तेन लोकः॥

पञ्चमोऽङ्कः

१. निष्केति काचित् विपणनमुद्रा ईशुसंवत्सरात् प्रागेव चलति स्मेति पुराविदः।

पुरोहितस्य हस्तं प्रापयिष्यामि। १.६

**उद्यानपालिका** अह किंणिमित्तं? अथ किंनिमित्तम्? १.७

**सारसकः** जदप्पहुदि सेणावदिजण्णतुरंगक्खणे णिउत्तो भट्टदारओ वसुमित्तो तदप्पहुदि तस्स आउसणिमित्तं 'णिक्कसद-सुवण्णपरिमाणं दक्खिणं देवी दक्खिणीएहिं परिग्गाहेदि। यतः प्रभृति सेनापतियज्ञतुरङ्गरक्षणे नियुक्तो भर्तृदारको वसुमित्रः ततः प्रभृति तस्यायुर्निमित्तं निष्कशतसुवर्ण-परिमाणां दक्षिणां देवी दक्षिणीयैः परिग्राहयति। १.८

**उद्यानपालिका** जुज्जइ। अह कहिं देवी? किं वा अणुचिट्ठदि? युज्यते। अथ कुत्र देवी? किं वानुतिष्ठति? १.९

**सारसकः** मंगलघरे आसणत्था भविअ विदब्भविसआदो भादुणा वीरसेणेण पेसिदं लेहं लेहकरीहिं वाइअमाणं सुणादि। मङ्गलगृहे आसनस्था भूत्वा विदर्भविषयाद् भ्रात्रा वीरसेनेन प्रेषितं लेखं लेखकरीभिर्वाच्यमानं शृणोति। १.१०

**उद्यानपालिका** को उण विदब्भराअवुत्तंतो? कः पुनर्विदर्भराजवृत्तान्तः? १.११

**सारसकः** वसीकिदो क्खु वीरसेणप्पमुहेहिं भट्टिणो विअअदण्डेहिं विदब्भणाहो। मोइदो से दाआदो माहवसेणो। तेण महासाराणि रदणाणि वाहणाणि सिप्पआरिआभूइट्ठं परिअणं अ उवाअणीकरिअ भट्टिणो सआसं पेसिदो दूदो त्ति। वशीकृतः किल वीरसेनप्रमुखैर्भर्तुर्विजयदण्डैर् विदर्भनाथः। मोचितोऽस्य दायादो माधवसेनः। तेन महासाराणि रत्नानि वाहनानि शिल्पकरिकाभूयिष्ठं परिजनञ्चोपायनीकृत्य भर्तुः सकाशं प्रेषितो दूत इति। १.१२

**उद्यानपालिका** गच्छ अणुचिट्ठ अत्तणो णिओअं। अहं वि देविं पेक्खिस्सं। गच्छानुतिष्ठात्मनो नियोगम्। अहमपि देवीं प्रेक्षिष्ये। १.१३

**उभौ** *निष्क्रान्तौ* १.१४

॥ ३ ॥

*ततः प्रविशति प्रतीहारी* १.१५

**प्रतीहारी** आणत्तम्हि असोअ–सक्कार–वावुदाए देविए विण्णावेहि अज्जउत्तं इच्छम्मि अज्जउत्तेण सह असोअरुक्खस्स पसूणलच्छिं पच्चक्खीकादुं त्ति। जाव धम्मासणागदं देवं पडिवालेमि। आज्ञप्तास्मि अशोकसत्कारव्यापृतया देव्या– 'विज्ञापय आर्यपुत्रम् इच्छामि आर्यपुत्रेण सहाशोकवृक्षस्य प्रसूनलक्ष्मीं प्रत्यक्षीकर्तुमि'ति। यावद् धर्मासनागतं देवं प्रतिपालयामि। *परिक्रामति* १.१६

*नेपथ्ये* १.१७

**वैतालिकौ** विजयतां देवः। १.१८

**प्रथमः** दिष्ट्या दण्डैरेव रिपुशिरस्सु वर्त्तते देवः। १.१९

परभृतकलव्याहारेषु त्वमात्तरतिर्मधुं
नयसि विदिशातीरोद्यानेष्वनङ्ग इवाङ्गवान् ।
विजयकरिणामालानत्वं गतैः प्रबलस्य[३] ते
वरद! वरदारोधोवृक्षैः सहावनतो रिपुः ॥ १ ॥

**द्वितीयः** २.१

विरचितपदं वीरप्रीत्या सुरोपम! सूरिभि–
श्चरितमुभयोर्मध्येकृत्य स्थितं क्रथकैशिकान् ।
तव हृतवतो दण्डानीकैर्विदर्भपतेः श्रियं
परिघगुरुभिर्दोर्भिर्विष्णोः प्रसह्य च रुक्मिणीम्[४] ॥ २ ॥

**प्रतीहारी** एसो जअसद्दसूइदप्पत्थाणो भट्टा इदो एव्व आअच्छदि। अहं वि दाव इमस्स पमुहादो ओसरिअ एदं मुहालिंदतोरणं समस्सिदा होमि। एष जयशब्द-सूचितप्रस्थानो भर्ता इत एवागच्छति। अहमपि तावदस्य प्रमुखादपसृत्य एतन्मुखालिन्दतोरणं समाश्रिता भवामि। *एकान्ते स्थिता* ३.१

॥ इति प्रवेशकः ॥[५] ३.२

## ॥ अथ पञ्चमोऽङ्कः ॥ ३.३

॥ ४ ॥

*ततः प्रविशति सवयस्यो राजा।* ३.४

**राजा** ३.५

कान्तां विचिन्त्य सुलभेतरसंप्रयोगां
श्रुत्वा विदर्भपतिमानमितं बलैश्च ।
धाराभिरातप इवाभिहतं सरोजं
दुःखायते मम मनः सुखमश्नुते च ॥ ३ ॥

**विदूषकः** जह अहं पेक्खामी तह एक्कंतसुहिदो भवं हविस्सदि। यथाहं प्रेक्षे तथा एकान्तसुखितो भवान् भविष्यति। ४.१

**राजा** कथमिव? ४.२

**विदूषकः** अज्ज किल देविए एव्वं पंडितकोसिई भणिदा भअवदि! जं तुमं पसाहणगव्वं वहसि तं दंसेहि मालविआए सरीरे

---

२. एतन्मुद्राविंशतिं बिभ्रदेकं कठलानामकं ग्रैवेयकमिदानीं यावदपि प्रचलितमासीत्। एतदपि कुमारसंभवे प्रोल्लिख्यते–जयाशा यत्र चास्माकमिति २.४९ पद्ये।

३. मालानत्वं गतैः प्रबलस्य इति काग्र. पाठः। मालानाङ्कैरुपोढबलस्य इति हामा., काग्र. पाठभेदः। अत्र रघुवंश ४.६९ संवादः।

४. उक्तिरियमिदमेव नाटकं विसिनोति। क्रथकैशिका अत्र विषयः। वैवाहिको विधिरेवात्र साधनं यज्ञमाधवसेनयोः समबलत्वौपयिके विदर्भद्वैराज्ये। एवमनुपप्रवेदानीं पूर्वतः पश्चिमां यावत् संपूर्णापि भारतीया भूः। एवं द्वितीयो वैतालिकोऽत्र कालिदास एव।

५. वैतालिकोक्त्योः संस्कृतबद्धत्वात् प्रवेशकबाह्यत्वमुत्प्रेक्ष्येत, अथवा मिश्रविष्कम्भकत्वं स्वीक्रियेत।

वेदब्भं विवाहणेवत्थं[६] त्ति। ताए सविसेसालंकिदा मालविआ। तत्तभोदी कदावि पूरए भवदो वि मणोरधं। अद्य किल देव्या एवं पण्डितकौशिकी भणिता— भगवति! यत् त्वं प्रसाधनगर्वं वहसि तद् दर्शय मालविकायाः शरीरे वैदर्भं विवाहनेपथ्यमिति। तया सविशेषालंकृता मालविका। तत्रभवती कदाचित् पूरयेद् भवतोऽपि मनोरथम्। ४.३

राजा सखे! मदपेक्षानुवृत्त्या निवृत्तेर्ष्याया धारिण्याः [७]पूर्व्वचरितैः संभाव्यत एवैतत्। ४.४

प्रतीहारी *उपगम्य* जेदु भट्टा! देवी विण्णावेदि तवणीआसोअस्स कुसुमसोहग्गदंसणेण मह आरंभो सहलो करीअदु त्ति। जयतु भर्ता। देवी विज्ञापयति— तपनीयाशोकस्य कुसुमसौभाग्य-दर्शनेन ममारम्भः सफलः क्रियतामिति। ४.५

राजा ननु तत्रैव देवी तिष्ठति? ४.६

प्रतीहारी अध किं। जहरिहसंहारासुहितं अंतेउरं विसज्जिअ मालविआपुरोएण अत्तणो परिअणेण सह देवं पडिवालेदि। अथ किम् यथार्हसम्भारसुखितमन्तःपुरं विसृज्य मालविकापुरोगेण आत्मनः परिजनेन सह देवं प्रतिपालयति। ४.७

राजा *सहर्षं विदूषकं विलोक्य* जयसेने! गच्छाग्रतः। ४.८

प्रतीहारी एदु एदु देवो। एत्वेतु देवः। *परिक्रामति* ४.९

विदूषकः *विलोक्य* भो वअस्स! किंवि परिवुत्तजोव्वणो विअ वसंतो पमदवणे लक्खीअदि। भो वयस्य! किंचित्परिवृत्तयौवन इव वसन्तः प्रमदवने लक्ष्यते। ४.१०

राजा यथाह भवान् — ४.११

**अग्रे विकीर्णकुरबकफलजालकभिद्यमानसहकारम्।**
**परिणामाभिमुखमृतोरुत्सुकयति यौवनं चेतः ॥४॥**

विदूषकः *परिक्रम्य* अहो! अअं सो दिण्णणेवत्थो विअ कुसुमत्थवएहिं तवणीआसोओ। ओलोअदु भवं। अहो! अयं स दत्तनेपथ्य इव कुसुमस्तबकैस्तपनीयाशोकः। अवलोकयतु भवान्। ५.१

राजा स्थाने खलु प्रसवमन्थरोऽयमभूत् यदिदानीम् अनन्य-साधारणीं शोभामुद्वहति। पश्य— ५.२

**सर्वाशोकतरूणां प्रथमं सूचितवसन्तविभवानाम्।**
**निर्वृत्तदोहदेऽस्मिन् संक्रान्तानीव कुसुमानि ॥५॥**

विदूषकः तधा। भो वीसद्धो होहि अम्हेसु संणिहिदेसु धारिणी पासपरिवट्टिणीं मालविअं अणुमण्णेदि। तथा। भोः विस्रब्धो भव। अस्मासु संनिहितेषु धारिणी पार्श्वपरिवर्तिनीं मालविकामनुमन्यते। ६.१

राजा *सहर्षं* सखे! पश्य— ६.२

**मामियमभ्युत्तिष्ठति देवी विनयादनूत्थिता प्रियया।**
**विस्मृतहस्तकमलया नरेन्द्रलक्ष्म्या वसुमतीव ॥६॥**

॥५॥

*ततः प्रविशति धारिणी मालविका परिव्राजिका विभवतश्च परिवारः ७.१*

मालविका *आत्मगतम्* जाणामि णिमित्तं कोदुआलंआरस्स तधावि भिसिणीवत्तगदं सलिलं विअ वेवदि मे हिअअं। दक्खिणेदरं णअणं अ पप्फुरदि। जानामि निमित्तं कौतुकालंकारस्य अथापि बिसिनीपत्रगतं सलिलमिव वेपते मे हृदयम्। दक्षिणेतरं नयनञ्च प्रस्फुरति। ७.२

विदूषकः भो वअस्स! विवाहणेवत्थेण सविसेसं क्खु सोहदि अत्तभोदी मालविआ। भो वयस्य! विवाहनेपथ्येन सविशेषं खलु शोभते अत्रभवती मालविका। ७.३

राजा पश्याम्येनाम्। एषा — ७.४

**अनतिलम्बिदुकूलनिवासिनी**
**[८]लघुभिराभरणैः प्रतिभाति मे।**
**उडुगणैरुदयोन्मुखचन्द्रिका**
**हतहिमैरिव चैत्रविभावरी ॥७॥**

धारिणी *उपेत्य* जेदु जेदु अज्जउत्तो। जयत्वार्यपुत्रः। ८.१

विदूषकः वड्ढदु भोदी। वर्धतां भवती। ८.२

परिव्राजिका विजयतां देवः। ८.३

राजा भगवति! अभिवादये। ८.४

परिव्राजिका अभिप्रेतसिद्धिरस्तु। ८.५

धारिणी *सस्मितम्।* अज्जउत्त! एस दे अम्हेहिं तरुणी-अणसहाअस्स असोओ संकेतगेहको [९]कप्पिदो। आर्यपुत्र! एष ते अस्माभिस्तरुणीजनसहायस्य अशोकः संकेतगृहं कल्पितः। ८.६

विदूषकः भो! आराहिओसि। भोः आराधितोऽसि। ८.७

राजा *सव्रीडमशोकमभितः परिक्रामन्*— ८.८

**नायं देव्या भाजनत्वं न नेयः**
**सत्काराणामीदृशानामशोकः।**
**यः सावज्ञो माधवश्रीनियोगे**
**पुष्पैः शंसत्यादरं त्वत्प्रयत्ने ॥८॥**

विदूषकः भो! वीसद्धो भविअ तुमं जोव्वणवदिं इमं पेक्ख। भो! विस्रब्धो भूत्वा त्वं यौवनवतीमिमां प्रेक्षस्व। ९.१

धारिणी कं ? काम्? ९.२

विदूषकः भोदि! तवणीआसोअस्स कुसुमलच्छीं। भवति! तपनीयाशोकस्य कुसुमशोभाम्। ९.३

---

६. वैदब्भम् इति हामायां नास्ति। काग्र. पुनः वैदब्भविवाहेति पठति।
७. ०मदपेक्षामनुमाप्यानया धारिण्याऽपूर्वच० इति हामा.।

८. बहुभिरिति काग्र.। प्रस्तुतस्तु पाठः हामागतः।
९. संकप्पिदो इति हामा.।

**सर्वे** *उपविशन्ति*। ९.४

**राजा** *मालविकां विलोक्य* कष्टं खलु सन्निधिवियोगः — ९.५

**अहं रथाङ्गनामेव प्रिया सहचरीव मे ।**
**अननुज्ञातसंपर्का धारिणी रजनीव नौ ॥ ९॥**

*ततः प्रविशति कञ्चुकी* १०.१

**कञ्चुकी** विजयतां देवः। अमात्यो विज्ञापयति— विदर्भविषयोपायने द्वे शिल्पकारिके मार्गपरिश्रमादलघुशरीरे इति पूर्वं न प्रवेशिते। संप्रति देवोपस्थानयोग्ये तदाज्ञां देवो दातुमर्हतीति। १०.२

**राजा** प्रवेशय ते। १०.३

॥ ६॥

**कञ्चुकी** यदाज्ञापयति देवः! *निष्क्रम्य ताभ्यां सह प्रविश्य* इत इतो भवत्यौ। उभे *उपसर्पतः* १०.४

**प्रथमा** *जनान्तिकम्* हला मदणिए! अपुव्वं इमं राअउलं पविसन्तीए पसीददि मे हिअअं। सखि मदनिके! अपूर्वमिदं राजकुलं प्रविशन्त्याः प्रसीदति मे हृदयम्। १०.५

**द्वितीया** जोसिणिए! मह वि एव्वं येव। अत्थि क्खु लोकवादो आआमि सुहं दुक्खं वा हृदयसमवत्था कधेदि त्ति। ज्योत्स्निके! ममाप्येवमेव। अस्ति खलु लोकप्रवादः आगामि सुखं दुःखं वा हृदयसमवस्था कथयतीति। १०.६

**प्रथमा** सो सच्चो दाणिं होदु। स सत्य इदानीं भवतु। १०.७

**कञ्चुकी** एष देव्या सह देवस्तिष्ठति। उपसर्पेतां भवत्यौ। १०.८

**उभे** *उपसर्पतः*। १०.९

*मालविका परिव्राजिका च चेट्यौ विलोक्य परस्परं विलोकयतः*१०.१०

**उभे** *प्रणिपत्य* जेदु भट्टा। जेदु भट्टिणी। जयतु भर्ता। जयतु भट्टिनी। १०.११

**राजा** इतो निषीदतम् । १०.१२

**उभे** *उपविष्टे* । १०.१३

**राजा** कस्यां कलायामभिविनीते भवत्यौ? १०.१४

**उभे** भट्टा! संगीदए अब्भंदरे म्हः। भर्तः! संगीतके अभ्यन्तरे स्वः। १०.१५

**राजा** देवि! गृह्यतामनयोरन्यतरा। १०.१६

**धारिणी** मालविए! इदो पेक्ख। कदरा दे संगीदसहआरिणी रुच्चदि? मालविके! इतः पश्य। कतरा ते संगीतसहकारिणी रोचते? १०.१७

**उभे** *मालविकां दृष्ट्वा* अम्हो भट्टदारिआ। जेदु जेदु भट्टदारिआ। अहो भर्तृदारिका। जयतु जयतु भर्तृदारिका।

*प्रणम्य तया सह बाष्पं विसृजतः*। १०.१८

*सर्वे सविस्मयं विलोकयन्ति* १०.१९

**राजा** के भवत्यौ? का वा इयम् ? १०.२०

**उभे** भट्टा! एसा अम्हाणं भट्टदारिआ। भर्तः! एषास्माकं भर्तृदारिका। १०.२१

**राजा** कथमिव? १०.२२

**उभे** सुणादु भट्टा! जो सो भट्टिणा विअअदंडेहिं विदब्भणाधं वसीकरिअ बंधणादो मोइदो कुमारो माहवसेणो णाम तस्स इयं कणीअसी बहिणिआ मालविआ णाम। शृणोतु भर्ता! यः स भर्त्रा विजयदण्डैर्विदर्भनाथं वशीकृत्य बन्धनान् मोचितः कुमारो माधवसेनो नाम तस्येयं कनीयसी भगिनी मालविका नाम। १०.२३

**धारिणी** कथं राअदारिआ इअं। चंदणं क्खु मए पादुओवओएण दूसिदं। कथं राजदारिकेयम्। चन्दनं खलु मया पादुकोपयोगेन दूषितम्। १०.२४

**राजा** अथ अत्रभवती कथमित्थंभूता? १०.२५

**मालविका** *निःश्वस्य आत्मगतम्* । विहिणिओएण। विधिनियोगेन। १०.२६

**द्वितीया** सुणादु भट्टा! दाआदवसंगदे भट्टदारए माहवसेणे तस्स अमच्चेण अज्जसुमदिणा अम्हारिसं परिअणं उज्झिअ गूढं आणीदा एषा। शृणोतु भर्ता! दायादवशंगते अस्माकं भर्तृदारके माधवसेने तस्यामात्येनार्यसुमतिना अस्मादृशं परिजनमुज्झित्वा गूढमानीतैषा। १०.२७

**राजा** श्रुतपूर्व्वं मयैतत्। ततस्ततः? १०.२८

**द्वितीया** भट्टा! अदो अवरं ण जाणामि। भर्तः! अतः परं न जानामि। १०.२९

**परिव्राजिका** अतः परमहं मन्दभागिनी कथयिष्यामि। १०.३०

**उभे** भट्टदारिए! अज्जकोसिइए विअ सरसंजोगो। णं सा एव्व। भर्तृदारिके! आर्यकौशिक्या इव स्वरसंयोगः। ननु सैव। १०.३१

**मालविका** अध किं। अथ किम्। १०.३२

**उभे** यदिवेसधारिणी अज्जकोसिइ दुःखेण विभावीअदि। भअवदि! णमो दे। यतिवेषधारिणी आर्यकौशिकी दुःखेन विभाव्यते। भगवति! नमस्ते। १०.३३

**परिव्राजिका** स्वस्ति भवतीभ्याम्। १०.३४

**राजा** कथमयमाप्तवर्गोऽयं भगवत्याः? १०.३५

**परिव्राजिका** एवमेतत्। १०.३६

**विदूषकः** तेण हि कधेदु भअवदी अत्तहोदीए वुत्तंतावसेसं। तेन हि कथयतु भगवती अत्रभवत्या वृत्तान्तावशेषम्। १०.३७

**परिव्राजिका** *सवैक्लव्यम्* श्रूयतां तावत्। माधवसेनसचिवं ममाग्रजं सुमतिमवगच्छ। १०.३८

**राजा** उपलक्षितः। ततस्ततः ? १०.३९

**परिव्राजिका** स इमां तथागतभ्रातृकां मया सार्धमपवाह्य भवत् संबन्धापेक्षया पथिकसार्थं विदिशागामिनमनुप्रविष्टः। १०.४०

**राजा** ततस्ततः? १०.४१

**परिव्राजिका** स च अटव्यन्तरे निविष्टो गताध्वा वणिग्गणः। १०.४२

**राजा** ततस्ततः? १०.४३

**परिव्राजिका** ततः १०.४४

**तूणीरपट्टपरिणद्धभुजान्तरालम्**
**आपार्ष्णिलम्बिशिखिबर्हकलापधारि ।**
**कोदण्डपाणि निनदत् [१०]प्रतिरोधकानाम्**
**आपातदुष्प्रसहमाविरभूदनीकम् ॥१०॥**

**मालविका** *भयं रूपयति* ११.१

**विदूषकः** भोदि! मा भआहि। अदिक्कंतं क्खु तत्तभोदी कधेदि।
भवति! मा बिभेहि। अतिक्रान्तं खलु तत्रभवती कथयति। ११.२

**राजा** ततस्ततः। ११.३

**परिव्राजिका** ततो मुहूर्तं बद्धयुद्धास्ते पराङ्मुखीभूताः सार्थवाहयोद्धारस्तस्करैः। ११.४

**राजा** भगवति! अतः कष्टमिदानीं श्रोतव्यम्। ११.५

**परिव्राजिका** ततः स मत्सोदर्यः — ११.६

**इमां परीप्सुर्दुर्जाते[११] पराभिभवकातराम् ।**
**भर्तृप्रियः प्रियैर्भर्त्तुरानृण्यमसुभिर्गतः ॥११॥**

**मालविका**[१२] हा! हतो सुमदि। हा, हतः सुमतिः। १२.१

**द्वितीया** तदो क्खु भट्टदारिकाया इअं समवत्था संवुत्ता। ततः खल्वियं भर्तृदारिकायाः समवस्था संवृत्ता। १२.२

**परिव्राजिका** *बाष्पं विसृजति* । १२.३

**राजा** भगवति! [१३]तनुभृतामीदृशी लोकयात्रा। न शोच्यस्तत्र—भवान् सुमतिः सफलीकृतभर्तृपिण्डस्तपस्वी। १२.४

**परिव्राजिका** ततोऽहं मोहमुपगता यावत् संज्ञां लभे तावदियं दुर्लभदर्शना संवृत्ता। १२.५

**राजा** महत् खलु कृच्छ्रमनुभूतं तत्रभवत्या। १२.६

**परिव्राजिका** ततो भ्रातुः शरीरमग्निसात्कृत्वा पुनर्नवीकृतवैधव्य—दुःखया त्वदीयं देशमवतीर्य[१४] काषाये गृहीते। १२.७

**राजा** युक्तः सज्जनस्यैष पन्थाः। १२.८

**परिव्राजिका** सेयमाटविकेभ्यो वीरसेनं वीरसेनाद् देवीं गता। देवगृहे लब्धप्रवेशया मया दृष्टेत्येतदवसानं कथायाः। १२.९

**मालविका** (आत्मगत) किं णु क्खु संपदं भट्टा भणादि? किं नु खलु सांप्रतं भर्त्ता भणति? १२.१०

**राजा** अहो परिभवे प्रहारिणो विनिपाताः! कुतः १२.११

**प्रेष्यभावेन नामेयं देवीशब्दक्षमा सती ।**
**स्नानीयवस्त्रक्रियया पत्रोर्णेवो/र्णं वोपयुज्यते॥१२॥**

---

१०. प्रतिरोधकास्तस्कराः। प्रतिरोधकादस्यव इत्यमरः।

११. दुर्जातं विपत्कालः। रघुवंशे १३.७२, दुर्जातिर्दुष्टा जातिः। सा चात्र भिल्लजातिः।

१२. प्रथमा इति काग्र.। मालविका इति हामा.।

१३. तनुत्यजामिति हामा.।

१४. सीतायाः काषायग्रहणं रघुवंशेऽपि। १५.७७।

**धारिणी** भअवदि! तुए अहिजणवदिं मालविअं अणाचक्खंतीए असंपदं किदं। भगवति! त्वया अभिजनवतीं मालविकाम् अनाचक्षाणया असांप्रतं कृतम्। १३.१

**परिव्राजिका** शान्तं पापम्। कारणेन खलु मया नैर्घृण्यम् अवलम्बितम्। १३.२

**धारिणी** किं वि तत् कारणं? किमिव तत् कारणम्? १३.३

**राजा** यदि वक्तव्यं कथ्यताम् ।१३.४

**परिव्राजिका** इयं पितरि जीवति केनापि देवयात्रागतेन सिद्धादेशकेन साधुना मत्समक्षमादिष्टा वत्सरमात्रमियं प्रेष्यभावम् अनुभूय ततः सदृशभर्तृगामिनी[१५] भविष्यतीति। तमेनम् अवश्यभाविनमादेशमस्यास्त्वत्पादशुश्रूषया परिणमन्तम् अवेक्ष्य कालप्रतीक्षया मया साधु कृतमिति पश्यामि।१३.५

**राजा** युक्ता प्रतीक्षा। १३.६

**कञ्चुकी** *प्रविश्य* देव! कथान्तरेणान्तरितम्। अमात्यो विज्ञापयति विदर्भगतमनुष्ठेयमवधारितमस्माभिः। देवस्य तावद—भिप्रायं श्रोतुमिच्छामि इति। १३.७

**राजा** मौद्गल्य! तत्रभवतोर्यज्ञसेनमाधवसेनयोर्द्वैराज्यम् अवस्थापयितुकामोऽस्मि। १३.८

**तौ पृथग् वरदाकूले शिष्टामुत्तरदक्षिणे ।**
**नक्तन्दिवं विभज्योभौ शीतोष्णकिरणाविव ॥१३॥**

**कञ्चुकी** देव! एवममात्यपरिषदे विज्ञापयामि। १४.१

**राजा** *अङ्गुल्यानुमनुते* १४.२

**कञ्चुकी** *निष्क्रान्तः* १४.३

**प्रथमा** *जनान्तिकम्* भट्टिदारिए! दिट्ठिआ भट्टिदारओ अर्द्धरज्जे पडिट्ठां गमिस्सदि।भर्तृदारिके! दिष्ट्या भर्तृदारकः अर्द्धराज्ये प्रतिष्ठां गमयिष्यते। १४.४

**मालविका** एदं दाव बहु मणिदव्वं जो जीविदसंसआदो विमुक्को।
एतत् तावद् बहु मन्तव्यं यज्जीवितसंशयान्मुक्तः। १४.५

*पुनः प्रविश्य* १४.६

**कञ्चुकी** विजयतां देवः। अमात्यो विज्ञापयति— कल्याणी देवस्य बुद्धिः। मन्त्रिपरिषदोऽप्येतदेव दर्शनम् । कुतः — १४.७

**द्विधा विभक्तां श्रियमुद्वहन्तौ**
**धुरं रथाश्वाविव सङ्ग्रहीतुः ।**
**तौ स्थास्यतस्ते नृपतेर्निदेशे**
**परस्परावग्रहनिर्विकारौ ॥१४॥**

॥७॥

**राजा** तेन हि मन्त्रिपरिषदं ब्रूहि सेनान्ये वीरसेनाय लेख्यताम् एवं क्रियतामिति। १५.१

---

१५.भर्तृ इत्यस्योपरि हामायां लिखितं दृश्यते भ्रातृ इति।

**कञ्चुकी** यदाज्ञापयति देवः। *निष्क्रम्य सप्राभृतकं लेखं गृहीत्वा पुनः प्रविष्टः।* अनुष्ठिता प्रभोराज्ञा। अयं देवस्य सेनापतेः पुष्यमित्रस्य सकाशात् सोत्तरीयप्राभृतको लेखः प्राप्तः। प्रत्यक्षीकरोत्वेनं देवः। १५.२

**राजा** *उत्थाय सप्राभृतकं लेखं सोपचारं गृहीत्वा परिजनायार्पयति* १५.३

**परिजनः** *लेखं नाट्येनोद्वेष्टयति* १५.४

**धारिणी** अंम्हहे! तदोमुहं एव्व णो हिअअं। सुणिस्सं दाव गुरुअणस्स कुसलाणंदरं वसुमित्तस्स वुत्ततं। अदिभारे क्खु पुत्तओ सेणापती णिउत्तो। अहो! ततोमुखमेव नो हृदयम्। श्रोष्यामि तावद् गुरुजनस्य कुशलानन्तरं पुत्रस्य वसुमित्रस्य वृत्तान्तम्। अतिघोरे खलु मे पुत्रकः सेनापतिर्नियुक्तः। १५.५

**राजा** *उपविश्य वाचयति* स्वस्ति। यज्ञशरणात् सेनापतिः पुष्यमित्रो वैदिशस्थं पुत्रमायुष्मन्तम् अग्निमित्रं स्नेहात् परिष्वज्य अनुदर्शयति— विदितमस्तु योऽसौ राजयज्ञ—दीक्षितेन मया राजपुत्रशतपरिवृतं वसुमित्रं गोप्तारम् आदिश्य संवत्सरोपावर्त्तनीयो निरर्गलस्तुरङ्गमो विसर्ज्जितः स सिन्धोर्दक्षिणे रोधसि चरन्नश्वानीकेन ज(य)वनेन प्रार्थितः। तत उभयोः सेनयोर्महानासीत् संमर्दः। १५.६

**धारिणी** *विषादं नाटयति* १५.७

**राजा** कथं तादृशं संवृत्तम्? पुनर्वाचयति— १५.८

**ततः परान् पराजित्य वसुमित्रेण धन्विना ।**
**प्रसह्य ह्रियमाणो मे वाजिराजो निवर्त्तितः ।।१५।।**

**धारिणी** इमिणा आसासिदं मे हिअअं। अनेनाश्वस्तं मे हृदयम्। १६.१

**राजा** *लेखशेषं वाचयति* सोऽहमिदानीमंशुमतेव सगरः पौत्रेण प्रत्याहृताश्वो यक्ष्ये। तदिदानीमकालहीनं विगतरोषचेतसा भवता वधूजनेन सह [१६]यज्ञसवनायागन्तव्यमिति अनुगृहीतोस्मि। १६.२

**परिव्राजिका**[१७] दिष्ट्या पुत्रविजयेन दम्पती वर्धेते *धारिणीं विलोक्य* — १६.३

**भर्त्रासि वीरपत्नीनां श्लाघ्यायां स्थापिता धुरि ।**
**वीरसूरिति शब्दोऽयं तनयात् त्वामुपस्थितः ।।१६।।**

**विदूषकः** भोदि! परितुट्ठोम्हि जं पिदरं अणुजादो वच्छओ। भवति! परितुष्टोस्मि यत् पितरमनुजातो वत्सकः। १७.१

**कञ्चुकी** ननु कलभेन यूथपतेरनुकृतम्। किन्तु— १७.२

**नैतावता वीरविजृम्भितेन**
**चित्तस्य नो विस्मयमादधाति ।**
**यस्याप्रधृष्यः प्रभवस्त्वमुच्चै—**
**रग्नेरपां दग्धुरिवोरुजन्मा ।।१७।।**

१६. यज्ञसेवनायेति हामा.।

१७. १६.३ आरभ्य १७.२ पर्यन्तं वक्तृणां भेदः। द्रष्टव्यमस्माकं कालिदासग्रन्थावल्या द्वितीयं संस्करणम्।

**राजा** मौद्गल्य! यज्ञसेनश्यालमुररीकृत्य मुच्यन्तां सर्वे बन्धनस्थाः। १८.१

**कञ्चुकी** यदाज्ञापयति देवः। *निष्क्रान्तः* १८.२

**धारिणी** जअसेणे! गच्छ। इरावदीमुहाण[१८] अंतेउराणं पुत्तस्स विअअवुत्ततं णिवेदेहि। जयसेने! गच्छ। इरावती—प्रमुखेभ्योऽन्तःपुरेभ्यः पुत्रस्य विजयवृत्तान्तं निवेदय। १८.३

**प्रतीहारी** तध। तथा। *प्रस्थिता* १८.४

**धारिणी** एहि दाव। एहि तावत् १८.५

**प्रतीहारी** *प्रतिनिवृत्य* इय म्हि। इयमस्मि। १८.६

**धारिणी** *जनान्तिकम्* जं मए असोअदोहदणिओए मालविआए पडिण्णादं तं से अभिअणं अ णिवेदिअ मम वअणेण इरावदिं अणुणेहि— 'तुह अहं सच्चादो ण विभंसिदव' त्ति। यन्मयाशोकदोहदनियोगे मालविकायै प्रतिज्ञातम् तदस्या अभिजनं च निवेद्य मम वचनेनेरावतीमनुनय— 'त्वया अहं सत्यान्न विभ्रंशयितव्ये'ति। १८.७

**प्रतीहारी** यद् देवी आणवेदि। *निष्क्रम्य पुनः प्रविश्य* च भट्टिणि! पुत्तविअअणिमित्तेण पारिदोसिएण अंतेउराणं आहरणाणं मंजूसिआ म्हि संवुत्ता। यद् देवी आज्ञायति। (निष्क्रम्य पुनः प्रविश्य) भट्टिनि! पुत्रविजयनिमित्तेन परितोषेण अन्तःपुराणाम् आभरणानां मञ्जूषास्मि संवृत्ता। १८.८

**धारिणी** किं एत्थ अच्छरिअं साधारणो णं अब्भुदओ ताणं मह अ। किमत्राश्चर्यम् ननु साधारणः खलु तासां मम चायमभ्युदयः। १८.९

**प्रतीहारी** *जनान्तिकम्* भट्टिणि! इरावदी उण विण्णवेदि— सरिसं देवीए पुहवीए पहवंतीए। तुह वअणं संकप्पिदं ण जुज्जदि अण्णहा कादुं त्ति। भट्टिनि! इरावती पुनर्विज्ञापयति— सदृशं देव्याः पृथिव्यां प्रभवन्त्याः। तव वचनं संकल्पितं न युज्यते अन्यथा कर्तुमिति। १८.१०

**धारिणी** भअवदि! तुह अणुमदा इछामि अज्जसुमदिणां पढमं संकप्पिदां मालविआं अज्जउत्तस्स उववादेदुं। भगवति! त्वयानुमता इच्छामि आर्यसुमतिना प्रथमसंकल्पितां मालविकामार्यपुत्राय प्रतिपादयितुम्। १८.११

**परिव्राजिका** इदानीमपि त्वमस्याः प्रभवसि। १८.१२

।।८।।

**धारिणी** *मालविकां हस्ते गृहीत्वा* इमं अज्जउत्तो पिअणिवेदणाणुरूवं पारिदोसिअं पडिच्छदु। इदमार्यपुत्रः प्रियनिवेदनानुरूपं पारितोषिकं प्रतीच्छत्विति। १८.१३

**राजा** *व्रीडां नाटयति* १८.१४

**धारिणी** *सस्मितं* किं अवधीरेदि मं अज्जउत्तो? किम् अवधीरयति मामार्यपुत्रः? १८.१५

१८. हामायामत्र पाठः मलेकप्पमुहीणं मलेकेति नूनं मालविकाया अपलेखनम्।

**विदूषकः** भोदि! एसो लोअव्ववहारो सव्वो हि णववरो लज्जादुरो होदि त्ति। भवति! एष लोकव्यवहारः सर्वो नववरो लज्जातुरो भवतीति। १८.१६

**राजा** *विदूषकमवेक्षते* १८.१७

**विदूषकः** अध देवीए एव्व किदप्पणिव्विसेसं दिण्णदेवीसद्दं मालविअं अत्तभवं पडिग्गहीदुं इच्छदि। अथ देव्यैव कृतात्मनिर्विशेषां दत्तदेवीशब्दां मालविकामत्रभवान् प्रतिग्रहीतुम् इच्छति। १८.१८

**धारिणी** एदाए राजदारिआए अहिजणेण एव्व दिण्णो देवीसद्दो किं पुणरुत्तेण? एतस्या राजदारिकाया अभिजनेनैव दत्तो देवीशब्दः किं पुनरुक्तेन? १८.१९

**परिव्राजिका** मा मैवम्। १८.२०

**अप्याकरसमुत्पन्नो रत्नजातिपुरस्कृतः।**
**जातरूपेण कल्याणि! मणिः संयोगमर्हति ॥१८॥**[१९]

**धारिणी** *स्मृत्वा* मरिसेदु भअवदी अब्भुदअकहाए पढमं मए ण लक्खिदं। जअसेणे! गच्छ दाव। कोसेअपत्तोण्ण–जुगलं उवणेहि। (स्मृत्वा) मर्षयतु भगवती। अभ्युदयकथया प्रथमं मया न लक्षितम्। जयसेने! गच्छ तावत् कौशेयपत्रोर्णयुगलमुपनय। १९.१

**प्रतीहारी** जं भट्टिणी आणवेदि। *निष्क्रम्य पत्रोर्णं गृहीत्वा पुनः प्रविश्य* देवि! एदं। यद् देव्याज्ञापयति। (निष्क्रम्य पत्रोर्णं गृहीत्वा पुनः प्रविश्य) देवि! एतत्। १९.२

**धारिणी** *मालविकामवगुण्ठनवतीं कृत्वा* अज्जउत्तो दाणिं इमं पडिच्छदु। आर्यपुत्र! इदानीमिमां प्रतीच्छतु। १९.३

**राजा** त्वच्छासनं प्रत्यनुत्तरा वयम्। *अपवार्य* प्रतिगृहीतम्। १९.४

**धारिणी** *मालविकां राज्ञो वामपार्श्वे निवेशयति* १९.५

**परिव्राजिका** हन्त प्रतिगृहीता। १९.६

**विदूषकः** अहो देवीए अणुऊलदा। अहो देव्या अनुकूलता। १९.७

**धारिणी** *परिजनमवलोकयति* १९.८

**प्रतीहारी** *मालविकामुपेत्य* जेदु भट्टिणी। जयतु भट्टिनी। १९.९

**धारिणी** *परिव्राजिकां निरीक्षते* १९.१०

**परिव्राजिका** नैतच्चित्रं त्वयि। १९.११

**प्रतिपक्षेणापि पतिं सेवन्ते**
**भर्तृवत्सलाः**[२०]**साध्व्यः।**
**अन्यसरितामपि जलं/शतं**[२१]
**समुद्रगाः प्रापयन्त्युदधिम्॥१९॥**

*प्रविश्य* २०.१

**निपुणिका** जेदु भट्टा! इरावती विण्णावेदि जं उवआरातिक्कमेण तदा भट्टिणो अवरद्धं तं सअं एव्व भत्तुणो अणुऊअं णाम मए आअरिदं। संपदं पुण्णमणोरधेण भत्तुणा पसादमत्तेण संभावइदव्वे त्ति। जयतु भर्ता। इरावती विज्ञापयति– यदुपचारातिक्रमेण भर्त्रे अपराद्धा तत् स्वयमेव भर्तुरनुकूलं नाम मया आचरितम्। साम्प्रतं पूर्णमनोरथेन भर्त्रा प्रसादमात्रेण संभावयितव्येति। २०.२

॥९॥

**धारिणी** णिउणिए! अवस्सं से[२२] सेविदं अज्जउत्तो जाणिस्सदि। निपुणिके! अवश्यमस्याः सेवितमार्यपुत्रो ज्ञास्यति। २०.३

**निपुणिका** अणुगहीद म्हि। अनुगृहीतास्मि। *निष्क्रान्ता* २०.४

**परिव्राजिका** देव! अमुं तावत् त्वत्संबन्धेन चरितार्थं माधवसेनं त्वदाज्ञया दृष्ट्वा नयनसाफल्यं कर्तुमिच्छामि। २०.५

**धारिणी** भअवदि! ण जुत्तं अम्हाणं परिच्चत्तुं। भगवति! न युक्तमस्मान् परित्यक्तुम्। २०.६

**राजा** भगवति! मदीयेष्वेव पत्रेषु तत्रभवतस्त्वामुद्दिश्य सभाजनं निपातयिष्यामः। २०.७

**परिव्राजिका** युवयोः स्नेहात् परवानयं जनः। २०.८

**धारिणी** आणवेदु अज्जउत्तो! भूओ वि किं दे पिअं उअचरिस्सं? आज्ञापयतु आर्यपुत्र! भूयोऽपि किं ते प्रियमुपचरिष्ये? २०.९

**राजा** ममैतावदेव प्रियम्। तथापि – २०.१०

*(भरतवाक्यम्)*

**त्वं मे प्रसादसुमुखी भव देवि! नित्य–**
**मेतावदेव हृदये प्रतिपालनीयम्।**[२३]
**आशास्यमीतिविगमप्रभृति प्रजानां**
**संपत्स्यते न खलु गोप्तरि नाग्निमित्रे ॥२०॥**

*॥ निष्क्रान्ताः सर्वे॥* २१.१

**इति महाकविकालिदासकृतौ मालविकाग्निमित्रे नाटके साम्मनस्यसिद्धिर्नाम पञ्चमोऽङ्कः ॥**[२४] २१.२

॥ समाप्तमिदं कविचक्रचूडामणिकालिदासविरचितं मालविकाग्निमित्रं नाम नाटकम्॥[२५]

---

१९. बहुतरमत्र पाठान्तरम्। तदर्थं द्रष्टव्याऽस्माकं काग्र.–२। हार्वर्डमातृकायां पुनरयं पाठः– अस्माकमुत्सवमणिर्मणिजाति–पुरस्कृतः। जातरूपेण कल्याणि! तर्हि संयोगमर्हति ॥

२०. सत्यः इति तदुपरि च तन्व्यः इति हामा। द्र० रघुवंशे १९.२०

२१. जलम् इति केचित्।

२२. वसन्ते सेवितम् इति हामा

२३. ०मेतावदेव मृगये प्रतिपक्षहेतोः – इति हामा.।

२४. पञ्चमोऽङ्कः समाप्तमिदं ००० नाम नाटकम् इति हामा.।

२५. मया रेवाप्रसादेन काश्यपेन द्विवेदिना
एक्टने ज्येष्ठपुत्रस्य सर्वज्ञस्य निकेतने।
न्यूयार्कविश्ववाणिज्यकेन्द्रध्वंसाशिवे क्षणे
वसता कालिदासस्य समपादि कृतिस्त्वियम् ॥ श्रीरस्तु॥